# [ विष्णु - अङ्कः ]

यज्ञो वै विष्णुः । —श. प. १।१।२।१३

सम्पादकः — श्री भगवद्दत्तो वेदालङ्कारः

| | | | |
|---|---|---|---|
| वर्षम् १७ | पूर्णाङ्कः १९३ | भाद्रपदमास २००१ | अङ्कः १ |

वार्षिकशुल्कम्
देशे ४), विदेशे ६)

गुरुकुलकांगड़ीविश्वविद्यालयः, हरिद्वारम्
व्यवस्थापकः — श्री पं० सत्यव्रतो विद्यामार्तण्डः

अस्याङ्कस्य मूल्यम्
एकरूप्यकम्.

# गुरुकुल-पत्रिका

भाद्रपदमासः २०२१ वि०,
अगस्त सितम्बर १९६४ ईस्वी
पूर्णाङ्कः १९३

व्यवस्थापकः
श्री पं. सत्यव्रतो विद्यामार्तण्डः,
मुख्याधिष्ठाता,
गुरुकुलकाङ्गडीविश्वविद्यालयस्य


## अस्मिन्नङ्के




वार्षिक मूल्य देशे ४ ००, विदेशे ६.००
अस्याङ्कस्य मूल्य : एकरूप्यम्

अङ्कः १
वर्षम १७

सम्पादकः— श्री भगवद्दत्तो वेदालकारः
प्रबन्धकः— श्री प्रेमदेवः

ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]
भाद्रपदमासः २०२१ वि०, अगस्त-सितम्बर १९६४ ई०

## विष्णु-अङ्कः

ऋषिः—दीर्घतमा औचथ्यः । देवता – विष्णुः । छन्दः – त्रिष्टुप् ।

### पदे परमे मध्व उत्सः

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥
ऋ. १ । १५४ । ५

(तत्) (अस्य) (प्रियम्) येन प्रीणाति तत् (अभि) (पाथ) वर्त्म (अश्याम्) प्राप्नुयाम् (नरः) नेतारः (यत्र) यस्मिन् (देवयवः) ये देवान् दिव्यान् भोगान् कामयन्ते (मदन्ति) आनन्दयन्ति (उरुक्रमस्य) बहु पराक्रमस्य (सः) (हि) खलु (बन्धुः) दुःखविनाशकत्वेन सुखप्रदः (इत्था) अनेन प्रकारेण (विष्णोः) व्यापकस्य (पदे) प्राप्तव्ये (परमे) अत्युत्तमे मोक्षे पदे (मध्व.) मधुरादिरसयुक्तस्य (उत्सः) कूप इव तृप्तिकरः ।

अन्वयः—अहं यत्र देवयवो नरो मदन्ति तदस्योरुक्रमस्य विष्णोः प्रियं पाथोऽभ्यश्यां यस्य परमे पदे मध्व उत्स इव तृप्तिकरो गुणो वर्तते सहि इत्था नो बन्धुरिवास्ति ।

भावार्थ—अत्रोपमावाचकलुक्०-ये परमेश्वरेण वेदद्वारा दत्तामाज्ञामनुगच्छन्तिते मोक्षसुखमश्नुवते । यथा जना बन्धुं प्राप्य सहायं लभन्ते तृषिता वा मधुरजलं कूप प्राप्य तृप्यन्ति तथा परमेश्वरं प्राप्य पूर्णाऽऽनन्दा जायन्ते ।

—स्वामी दयानन्दः



# विष्णुदेवता-विमर्शः

श्री पं० विद्यानिधि. शास्त्री व्याकरणाचार्यः प्राध्यापक. गुरुकुल भैंसवाल कलां

वैदिक वाङ्मये प्रयुक्ताः प्रायः प्रत्येक शब्दा गूढ तात्पर्यमनेकार्थाभिधायित्वं चाभिव्यञ्जयन्तो रञ्जयन्ति विशेषेण वैदुषीजुषां विदुषां शेमुषीम् । लोके येषां शब्दानां बहुलं प्रसिद्धोऽर्थः सिद्धान्तशय्यामधिशेते त एवागमसमाम्नाये समाम्नाता सर्वथान्यादृश इव सन्तोऽर्थतो बहुधा भिद्यन्ते । अत एवाभाणीयं वाणी भगवत्यृग्वेदे—उवाच मे वरुणो मेधिराय त्रिःसप्त नामाघ्न्या बिभर्त्ति । विद्वान् पदस्य गुह्या न वोचत् (ऋ. ७.८७.४) इति । अघ्न्या गौ. सा च पृथिवी सती एकविंशतिं नामधेयानि बिभर्ति । गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यादि निघण्टौ पठितत्वात् तथा सैव गौः वाक् सती त्रिगुणितानि सप्त नामानि बिभर्ति । सप्तहोतृभि सवनत्रये समुच्चारणात् । अथवा अघ्न्या अहन्तव्या आत्मशक्तिः एकविंशति नामानि तत्साहचर्याद् रूपाणि च बिभर्ति समाश्रयति । अव्यक्तमहदहंकारपञ्चतन्मात्रासहितदेहेन्द्रियमनो बुद्धिभिरेकविंशत्या तत्त्वैरुपसृष्टत्वाच्चितिशक्तेः । अव्यक्तं प्रधानं प्रकृति. अलिङ्गं साम्यावस्थापन्नसत्त्वरजस्तमः संज्ञकगुणत्रयसमुच्चयः । तदेक तत्त्वम् । इन्द्रियाणि च ज्ञानकर्मभेदेन दशैव । मनसः पथङ् निर्देशात् । बुद्धिस्तु महत्तत्त्वादतिरिक्त नैयायिकाद्यभ्युपगतं ज्ञानमेवात्र ग्रहणीयम् । पञ्चतन्मात्राश्च गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणा इन्द्रियविषया विज्ञेयाः । देहशब्दोपि पञ्चानां भूतानामेकत्वेन परिग्रहं सूचयति । इत्थमेकविंशतिर्नामधेयानि [illegible]नो व्यवहारसाधनानि सम्पद्यन्ते । इत्येवमाद्यनेकविधं तात्पर्यमुक्तवाक्यस्य पर्यवस्यति । अतो भगवान् वरुणः परमेश्वरो मह्यं मेधिराय मेधाविने बुभुत्सवे शिष्यायेदं तत्त्वमुवाच । आप्तोपदेशवाक्यत्वेन वैदिक्या वाचो नानार्थत्व व्यवहित विप्रकृष्टसूक्ष्मपदार्थप्रत्यायकत्व चोपदिदेशेत्यर्थः । एव चैवं प्रायैरागमवचनै पदस्य वाक्यस्य वा गुह्यानि गूढानि तात्पर्याणि विद्वान् स्वयं जानन्नपि भगवान् वरुणो न वोचत् न स्पष्टं ब्रवीति । असाक्षात्कृतधर्मभ्य ऋषिभिन्नेभ्यः सम्यक्संविदसपन्नेभ्यः सामान्येभ्योऽन्येभ्यो मानवेभ्यो नवेभ्योऽनवेभ्यो वा न स्वकीयवाग्रहस्य विशदीकरोति । भवति कश्चिदेव देवश्चिद त्मनि संप्रतिपन्न प्रतिपन्नमतिः पुमान् य ईश्वरीयाया अपौरुषेय्या वाच ऐश्वर्यमनुरोद्धु बोद्धु शोद्धु वालंकर्मीणो भवतीति । आस्तां तावत् ।

अद्य वयं विष्णुशब्दार्थविवेचनं कर्त्तु प्रक्रान्ताः । कोऽसौ विष्णुः ? वैदिक्यां श्रुतौ विष्णुशब्दस्य कतिधार्थं इति प्रतिबोधनमेवास्मद्वाचां विषयः । विष्णुनामास्ति कश्चिद् देवविशेष इति विषये च विमर्शोऽयं प्रस्तूयते । लोके प्रसिद्धमस्ति विष्णुसञ्ज्ञक पुराणम् । यद्धि तद्धितविरोधि शोधितमति पुंस्कृत शिवादिसञ्ज्ञकपुराणप्रतिकूलं सदामूलमुन्मूलयति नितरां तद्भक्तेतराञ्चितचित्तवृत्तिभित्तीः । ब्रह्माविष्णुर्महेश इति त्रयोऽमी देवाः क्रमेण जगत उत्पत्तिस्थितिप्रलयकर्तारः प्रति बंभण्यन्ते पुराणपुराणप्राणत्राणक्षीणवाणीवीणाक्वाणैः । तेषु देवेषु विष्णुर्देवः सन्नप्युपेन्द्रेत्यपरपर्यायः इन्द्रस्य देवराजस्योपकर्ता देवानामुपरि विराजम नः परमात्मशक्तिरूपः सृष्टेः स्थितिस्थापकश्चास्तीत्यभिधीयते ।

किन्तु वेदब्राह्मणनिरुक्तादिग्रन्थग्रन्थीनुद्ग्रन्थमुद्ग्रन्थं पर्यालोचनेन यत्सत्यमुन्मीलति म्लानं मनः, विमलीभवति मलिना मनीषा । तत्र हि विष्णु-

शब्दस्य त्रयोऽर्था. साधीयो बुद्धिपथमृच्छन्ति । प्रथमो यज्ञः, द्वितीयो मध्याह्नकालिकः सूर्य, तृतीयः सर्वव्यापको भगवान् परमात्मा चेति । यज्ञो वै विष्णुः ( मैत्रायणी संहिता ३,८,३ ) इति, विष्णु र्वैयज्ञः ( मै. ३,८,७ ) इति च भूयो ब्राह्मणेषु साम्रेडमाम्रेडनात् । यज्ञमुद्दिश्य विष्णुत्वविधान, विष्णुमुद्दिश्य यज्ञत्वविधान चोभयोरैकात्म्यमवगमयति । यज्ञः कः इत्याकाङ्क्षाया विष्णुरित्यभिधानाद् भवत्याकाङ्क्षोपशमः । तथा विष्णुः कः इत्याकाङ्क्षाया यज्ञ इत्युक्तेर्भवत्येवाकाङ्क्षोपशमः । यथा-देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे (यजु १,१) इति यजुर्वचसि किं नु खलु श्रेष्ठतमं कर्मेति जिज्ञासायां यज्ञो वै श्रेष्ठतम कर्मेति शतपथादिब्राह्मणवचनात् श्रेष्ठतमकर्मणो यज्ञत्वं संपादितं भवति, नतु यज्ञस्य श्रेष्ठतमकर्मत्वम् । तत्र विषये सन्देहानुदयात् तस्यानुद्देश्यत्वाच्च । श्रेष्ठतमकर्मण्येव सन्देहदोलाधिरोहणात् तस्यैव चोद्देश्यत्वात् । विष्णुयज्ञयोस्तूभयथोद्देश्यत्वेन विधेयत्वेन चैकत्वस्यागमोक्तत्वादैकार्थ्यमसंदिग्ध विदग्धवाग्दिग्धं प्रमाणकोटीमाटीकते । मध्याह्नकालभवः सूर्योऽपि विष्णुर्भवतीत्यर्थमव्यर्थ समर्थयितु यास्कीयं निरुक्तं युक्तियुक्तमुक्तमर्थमतदर्थकदर्थनसमर्थ सगृह्णाति—अथ यद् विषितो भवति तद्विष्णुर्भवति । विष्णुर्विशते र्वा व्यश्नोतेर्वा । (यास्कनिरुक्त १२, १९) । विड्भिर्नूयते, विविधं स्नूयते स्नौति वेति वय स्वसंकल्पमनल्पधातुकल्पना जल्पैः कल्पयामः । विषितः व्याप्त. सर्वतो रश्मिभिः सम्बद्ध इत्यर्थः । विष् (व्याप्तौ) धातोः, विपूर्वक षिञ् (बन्धने) धातोर्वा व्युत्पादनीय. । विश् (प्रवेशने) धातोः विपूर्वकादशूङ् (व्याप्तौ) धातोर्वा निर्वचने तु सर्वत्र प्रविष्टत्वात् सर्वव्यापकत्वाद्वा परमात्मा भवति विष्णुः । विड्भिः प्रजाभिर्नूयमानत्वं स्तूयमानत्वं तूभयोः सूर्यपरमात्मनोः समानम् । विविध प्रस्रवणमानन्दधाराणामित्यपि चोभयत्र तुल्यम् । सूर्यो रोगनिवारणात् परमात्मा च स्वरूपादेवामन्दमानन्द जनयति इति ।

अग्निर्वै यज्ञस्यान्तोऽवस्ताद्, विष्णुः पुरस्ताद् (मै ३, ६, १) इति मैत्रायणीसंहितावचनाच्च सूर्य एव विष्णुः परिलक्षितो भवति । यज्ञस्य हि भूलोकेऽस्मिन् अग्निरन्तः । अन्तिमः प्रतिष्ठा । द्युलोके चामुष्मिन् विष्णुसंज्ञः सूर्य एव परिनिष्ठा । उभाभ्यामग्निसूर्याभ्यां परिरक्ष्यमाणो यज्ञः क्षेमाय कल्पते लोकस्येति प्रत्यक्षमीक्षामहे । अग्निर्ज्योतिरिति सायमाहूयतेऽग्निः । सूर्यो ज्योतिरिति प्रातराहूयते सूर्य. । स एव च विष्णुरिति नात्र शङ्काकलङ्काङ्कुरः सम्पत्तुमर्हति ।

वेदमन्त्राणामर्थविधौ यथास्वमिमे त्रयोऽप्यर्था विष्णुशब्देन समन्वयमयन्ते । विष्णोर्भगवतः परमेष्ठिनः श्रेष्ठिनः श्रेष्ठान् ज्येष्ठांश्च गुणानाश्रयमाणः प्राणवान् सम्यक्चारित्रः सर्वत्र समदर्शनः साधुमन्त्रार्थदृङ् निर्धूतकल्मषकिल्विषः किलाप्तो विद्वानप्याप्तो व्याप्तेन विष्णुना तादात्म्यं, तथा च व्यपदेष्टुं लभते इति चतुर्थोऽप्यर्थोऽपार्थो न भवति । उपलक्षणतया क्षणमीक्ष्यतां कृतलक्षणै र्विचक्षणैः केषांचिद् विष्णुदैवतमन्त्राणामर्थत्रयसमन्वयः । तथा हि—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुरे ॥
त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥
तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः

दिवीव चक्षुराततम् ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥
(ऋ॰ १,२२,१७-२१)

इदं विष्णुरिति परमात्मपक्षे—

विष्णुः सर्वव्यापक. परमेश्वरः इदं सकलं जगद् विचक्रमे । विक्रमेण पादक्रमेण वा क्रान्तवानस्ति । पादोऽस्य विश्वा भूतानि (यजु॰ ३१ ३) इत्यन्यत्र पुरुषसूक्तेऽप्यभिधानात् । त्रेधा अग्निना विद्युता सूर्येण च त्रिविधेन प्रकाशसाधनेन त्रिष्वपि लोकेषु पदं रश्मिसंचयं निदधे कृतवानस्ति । पांसुरे धूलिधूसरिते मध्यमलोकेऽन्तरिक्षे इवात्र म यामये जगति अस्य विष्णोः पदं प्रकाशः समूढं सम्यगन्तर्हितं वर्तते । संसारे वर्तमानोऽप्यसाववर्तमान इव विवर्तत इति । तत्पदं न सर्वे चर्मचक्षुका द्रष्टुं प्रभवन्ति किं तर्हि दिव्यचक्षुष एव तद्दर्शनं कर्तुमीशते ।

सूर्यपक्षे—विष्णुः सम्पूर्णरश्मिभिर्व्याप्तः सूर्यो देवः इद जगद् विचक्रमे । परिक्रामति । त्रेधा भूर्भुवः स्वराख्येषु त्रिष्वपि लोकेषु पदं रश्मिसमूहं निदधे निधत्ते । पांसुरे धूलिमिश्रे मध्यमे लोके अस्य सूर्यस्य रश्मिजालं समूढं सम्यग् अपरिलक्षितं भवतीति ।

यज्ञपक्षे–विष्णुः सर्वत्र प्रविष्टः परस्परोपकार्योपकारकभावरूपो यज्ञः अग्निहोत्ररूपो वा इदं जगत् विचक्रमे विविधं संचरति । त्रेधा मित्रोदासीनशत्रुरूपतया त्रिविधः प्राणिनां व्यवहारः प्रवर्तते । पांसुरे दुश्चरित्रे पुंसि यज्ञस्य पदं समूढं भवति । तत्र साधु व्यवहारः कर्तुं न पार्यते । क्रियमाणोऽपि वा यज्ञस्तत्र विफलीभवति सम्मूढत्वात् कर्तुरिति भावः ।

त्रीणि पदा—इत्यपरो मन्त्रोऽप्युक्तदिशैव संगमनीयः । अदाभ्य. अदम्भनीयः अहिंस्य. अकुटिल इति परमात्मसूर्ययज्ञेषु त्रिष्वपि शक्नोति घटितुम् । गोपाः इन्द्रियरक्षकः परमात्मा । रश्मिपालकः सूर्यः । गोपशुरक्षणकृद् यज्ञः । धर्माणि धर्मसाधनानि इति यज्ञात्मनोः । धर्माणि घर्माणि औष्ण्यदाहादीनि कर्माणीति सूर्यपक्षे । धकारघकारयोर्वर्णयोर्निरत्ययं व्यत्ययसम्प्रत्ययात् । विष्णोः कर्माणि—इति मन्त्रस्याप्युद्दिष्टैव दिगुद्दिष्टा । व्रतानि कर्माणि सुखदातृत्वौष्ण्यप्रकाशसरसविकस्वरसुरभिगन्धबुद्धिशुद्धिरूपाणि । पस्पशे पस्पशिरे । स्पश व्याप्तौ । व्याप्तानि प्रसृतानीत्यर्थः । इन्द्रस्य युज्यः योग्यः सखा । परमात्मा खलु इन्द्रस्य ऐश्वर्ययुक्तस्य जीवात्मनः प्रियः सखा भवति । यज्ञश्च इन्द्रस्य वायोः सहयोगापेक्षितया मित्रं भवति –'वायुरग्रेगाः यज्ञप्रीः (यजुः २७।३१) इत्याम्नानात् । सूर्योपि तथा । यज्ञसूर्ययोः पक्षे इन्द्रो वायुर्द्रष्टव्यः ।

तद्विष्णोः–इत्यत्रापि स एव सुगमः पन्थाः । सूरयः विद्वांसो योगिनः । भगवतो वैकुण्ठं धाम योगिन पश्यन्तीति भावः । वैकुण्ठमित्यस्य कुण्ठारहितमकुण्ठितं निर्बाधमित्यर्थः । तथा च वक्ष्यते—**विष्णोः पदे परमे मध्व उत्सः इति** । ऋ. १।१५४। ५) सूर्यस्य यज्ञस्य च परमं पदं तु सूरयः शूरा ध्यानिनो धीराः वीतरागाः सोमयागं कुर्वन्तो यज्वानो वा पश्यन्ति । तदुक्तमन्यत्र—सूर्यद्वारेण ते विरजाः प्रयान्तीति । यथा दिवि द्युलोके आततं विततं चक्षुः चक्षूरूपं सूर्यं सर्वे पश्यन्ति तथा तमेव सूर्यं लोकान्तरे भूर्भुवराख्येऽपि पश्यन्ति । परमात्मानं यज्ञं च सर्वत्रैव लोके समं पश्यन्तीत्यर्थः ।

**तद्विप्रासो विपन्यवः**—इत्येषोऽपि स्पष्टार्थः । विप्रासो मेधाविनः विपन्यवः स्तोतारः जागृवांसः

सततजागरणशीलाः या निशा सर्वभूतानां तस्यां जागर्ति संयमीत्युक्तलक्षणा मुनयः विष्णोः परमात्मनः सूर्यस्य यज्ञस्य च परम पदं स्थानं प्रकाशं वा समिन्धते। सम्यक् प्रद्योतयन्ति। तत्पदं गत्वा तथैव प्रकाशन्ते इति वा। पूर्वं परमात्मा प्रकाशस्थानीयः ततस्तदुत्पादितः सूर्यो यज्ञश्च विज्ञानज्ञ विज्ञानीयः।

इमे पञ्चापि मन्त्राः शब्दतो यत्किंचिद्भेदमापन्ना अपि अर्थतो नात्यन्तं भिन्नाः। सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार इति न्यायेन, "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।" इत्यभियुक्तोक्तयुक्त्या वा सकृदेव त्रिविधोऽप्युक्तोऽर्थ आभिः पञ्चभिर्ऋग्भिरभिधयैव प्रतिपाद्यते इत्यावेदितं भवति। तथा ऋग्वेदीयं विष्णुदेवताकं (१।१५४) सूक्तमपि प्रक्रान्तेऽर्थत्रये सुसंगतं भवति। तथाहि—विष्णोर्नुकं वीर्याणि प्रवोचम् इत्यादिषु षट्स्वपि मन्त्रेषु मुख्यतया विष्णोः पादत्रयक्रमणमेव न्यबन्धितद्वीर्यसम्बन्धि। तदीयं पादत्रय च परमात्मपक्षे त्रिषु लोकेषु तदीया सत्ता, सूर्ययज्ञयोश्च त्रिषु लोकेषु रश्मिप्रकाशसंचार इति सुज्ञानं चोक्तप्रायं च भवतीति साभिप्रायः प्रेयः प्रायोवाद.। विष्णुरेव पार्थिवानि पृथिव्यां विदितानि रजांसि लोकसमूहान् विममे निर्ममे। स च उरुगाय. महनीयकीर्ति। उत्तरं सधस्थं सर्वातिशायिद्युलोकमपि स एव विष्णुः अस्कभायत् स्कब्धवानस्ति। तथा चोक्तमन्यत्र—**स दाधार पृथिवीं द्यामुतेमाम्** (यजु. २३।१) **उक्षा महाँ अभिववक्ष एने** (ऋ. १।१४६।२) इति। एने द्यावापृथिव्यौ। उक्षा यज्ञरूपोऽग्निः। उरुक्रमः गुरुतरपादविक्षेपकारी। यस्य विष्णोः त्रीणि पदानि मधुना मधुरेण प्रकाशेनानन्देन सौरभेण च पूर्णानि सन्ति तस्य विष्णोः परमे पदे मध्वः मधुनः मोक्षसुखस्य हर्षवर्षप्रकर्षस्य तेजःप्रदप्रकाशस्य बुद्धिशुद्धि विवृद्धेश्च उत्सः प्रस्यन्दः शीतलविमलसलिलपरिपूर्णनिर्जरनिर्झरझरझरध्वनिधाराधारासारः समुल्लसति। स एव विष्णुः इत्था इत्थं भूतः सत्यः बन्धुः इष्ट मित्रभूतमस्ति। ता वां वास्तूनीति षष्ठे मन्त्रेऽस्ति कियांश्चित्पाठभेदः। ता वां वास्तूनि इति ऋग्वेदीय पाठस्थाने (यजुः ६।३) या ते धामानि इति पठ्यते। तत्र पाठभेदे सत्यपि नार्थभेदः कश्चित्। तृतीये पादे वृष्णः इति ऋग्वेदे पठ्यते। यजुषि मैत्रायण्यादिषु (मै. १।२।१४) च विष्णोः इति स्पष्टमेव पाठभेदः, वृष्णः वर्षितुः कामानाम्। विष्णोः व्यापकस्य। मन्त्रस्य देवता विष्णुरस्तीति वृष्णः इत्यस्यापि विष्णोरित्येवार्थः कल्पनीयः। वर्णव्यत्ययस्य छन्दसि बाहुल्येन दर्शनात्। मन्त्रार्थस्तु त्रिष्वपीत्थंकारं संघटनीयः—वय तानि वास्तूनि गृहाणि गमध्यै निर्बाधं गमनाय उश्मसि कामयामहे यत्र येषु गृहेषु भूरिश्रृङ्गा बहुलश्रृङ्गवत् तीक्ष्णाग्रभागाः गावः सूर्यरश्मयः यज्ञोत्पन्न सुगन्धसम्पन्नरश्मयो वा गोपशवो वा अयासः यातायात कुर्वन्ति। यत्र परमात्मोच्चारित वेदवाचामुच्चारणं वा भवति तेष्वेव गृहेषु वयं वस्तुमिच्छामः। अत्र अह एषु गृहेष्वेव निश्चयेन उरुगायस्य विष्णोः अतिपृथुलविपुलयशसो व्यापकस्य भगवतः परमात्मनः सूर्यस्य यज्ञदेवस्य च परमं पद प्रकृष्टः प्रकाशः आनन्दः सुगन्धश्च भूरि अवभाति। प्रखरप्रसरः प्रस्फुरति। एतेन मन्त्रेण नव्यभव्यवास्तुनिर्माणे वस्तुतः प्राणप्रदं वस्त्वपि समुपक्षिप्तम्। परमात्मनः संस्तवः स्तवः, स्फारः सूर्यकरसंचारः, प्रात्यहिको होमः सोमस्तोमश्च गृहेष्वावश्यकतां भजते इति गो विष्णुशब्दापदेशेन स्पष्टं

सूक्ष्मरूपदेशोप्यशङ्कमुदटङ्कि । निरुक्तस्य द्वितीयेऽध्यायेऽप्ययं मन्त्रो गोशब्दार्थनिरूपणप्रसङ्गेन व्याख्यायि ।

किं च—विष्णुना देवेन सह सम्प्रयुज्यमाना अग्नीन्द्रवरुणा इतीमे त्रयोऽन्ये देवा अपि वेदेषूपनिबद्धा श्रद्धाश्रद्धाबद्धाञ्जलिभिर्ऋषिभिस्तोष्टूय्यमाना उपलभ्यन्ते । तद्यथा—शौनकीयाथर्ववेदस्य सप्तमकाण्डे एकोनत्रिंशं सूक्तमाग्नावैष्णवम् । अग्नाविष्णू महि तद् वां महित्वम् इति मन्त्रद्वयमेव तत्र सूक्ते पठ्यते । तत्रापि विष्णुः सूर्यः अग्निश्च भौतिकोऽयं पार्थिवो ग्राह्यः । यज्ञो वा विष्णुपदार्थः । यज्ञाग्नी स्तूयेते । परमात्मपक्षे तु अग्निशब्देन ज्ञानप्रकाशस्वरूपत्वम्, विष्णुशब्देन च व्यापनशीलत्वमुपलक्ष्यते । ऋग्वेदीयं (७।६९) सूक्तमिन्द्रविष्णुदेवताकम् यदीयोऽष्टमोऽन्तिमो मन्त्रः सुतमां चमत्कृतिभागस्तीति । स प्रदर्श्यते—**उभा जिग्यथुर्न पराजयेथे न कपराजिग्ये तरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम् इति** (ऋ. ७।६९।८) अत्रेन्द्रशब्देन वायुः, विष्णुशब्देन च सूर्यो ग्राह्यः । वाय्वादित्यौ मिथः कदाचिदपि पराजयं न लभेते । कदाचिद् वायुः प्रचण्डो भवति । कदाचिच्च सूर्यः प्रखरीभूय भूयः प्रज्वलति । स्पर्धा तु तयोर्द्वयोः व्योममण्डले प्रत्यहं दृग्गोचरीभवत्येव । अपस्पृधेथाम् इत्यत्र अपपूर्वः स्पर्ध् (संघर्षे) धातुः । यङन्तो वा केवलः स्पर्ध् धातुर्द्रष्टव्यः । उभयथापि महाभाष्यकारैरुदाहारि हारि व्याख्यानमिदम् । सहस्रमपि भूमण्डलानां हे इन्द्राविष्णू ! युवां त्रेधा व्यैरयेथाम् । विष्णोस्त्रिविक्रमत्वाद् वाय्योश्च द्रुतमध्यविलम्बितगतिभेदात् त्रैविध्यम् । वाय्वादित्ययोस्त्रिविधविविधप्रेरणयैव भूमण्डलमिदं समुच्छ्वसितीति । तथा चान्यत्रोक्तम्—

**त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् इति** (ऋ. १०।२७।२३) के त्रयः ? पर्जन्यवाय्वादित्याः । कौ द्वौ ? वाय्वादित्यौ । बृबूकमुदकं प्रयच्छतो लोकस्य । तस्मिन्नेव सूक्ते षष्ठो मन्त्रो योस्ति तस्यायमशः स्मरणायोपप्रदर्श्यते—**समुद्रः स्थः कलशः सोमधानः** ( ऋ ७।६९।६ ) इति । हे इन्द्राविष्णू ! वाय्वादित्यौ ! युवां सोमधानः सोमरसोपलक्षितजलपूर्णः समुद्रः सम्यगुन्दनशीलः कलशः स्थ. । अत्र विधेय कलशस्यैकत्वेपि उद्देश्ययोरिन्द्राविष्ण्वोर्द्वित्वात् स्थ इति द्विवचनं नानुपपन्नम् । परमात्मपक्षे तु भगवतः शक्तिद्वयमिन्द्ररूपेण विष्णुरूपेण चोन्नेयम् । यज्ञपक्षे तु सूर्यपक्षे इव सुतरां समाधिः । वरुणेन साहचर्यमपि यजुर्वेदे (८।५९) द्रष्टव्यम् । तद्यथा—ययो रोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ ॥ पयोः विष्णुवरुणयोः । वरुणशब्देन जलस्य ग्रहणम् । विष्णुश्च सूर्य एव । आकाशमण्डलस्थ पर्जन्यजन्यजलं विष्णुः सूर्यो भूत्वा भूम्यां पातयति । तदेव च जलं पुनः स्वरश्मिभिरुपादाय खे पर्जन्यं जनयति जन्यमिव जनयन् इत्येव तदीयमोजः । पत्येते ऐश्वर्यं प्राप्नुतः । पत ऐश्वर्ये । सहोभिः बलैः । अप्रतीता अद्भुतशक्तित्वेन अप्रत्ययविषयौ । पूर्वहूतौ सर्वतः प्रागाहूतौ । पूर्वहूतिशब्दस्य सप्तम्येकवचनं वा द्रष्टव्यम् । अस्मदीयायां पूर्वहूतौ प्रथमाह्वाने ।

विष्णुवरुणौ अगन् आगच्छतः इत्यर्थः । अयमेव मन्त्रः शौनकीयाथर्ववेदे । (७।२५) किंचित्पाठभेदेनोपश्लिष्टो निर्दिष्टः । विष्णुमगन् वरुणं पूर्वहूतिः इति शब्दभेदे सत्यपि नार्थभेदः । इत्यलं बहुसंकल्पविकल्पकल्पनाभिः । एतावतैव भोत्स्यते वस्तुतत्त्वं विष्णुपदार्थस्य वेदैकगम्यस्येति ।

इदानी लोकतन्त्रे बहुलीभूतोऽयं वादो यद् विष्णु. सृष्टि न सृजति । केवलं पालयत्येवब्रह्मा जगदुत्पादयति । विष्णुः परिपालयति । महेशश्च प्रलीनयति । एव यथायथ संप्रविभज्य कर्म कुर्वाणेय देवतात्रयी मिथो न.तीव भिन्ना नचाभिन्नेति । तस्यैतस्य वेदानभिमतस्य मतस्य असिद्धस्यापि सिद्धवत् प्रसिद्धस्य मूलं वेदचतुष्टय्यामनुपलम्भाद् वय प्रत्याख्यान कुर्मः । वेद मन्त्रेषु हि य पार्थिवानि विममे रजांसि (ऋ १।१५४ १) इत्युक्तेः विष्णुनैव जगतो निर्माणमपि प्रतिपालनवत् प्रमाणप्रतिपन्न संदृश्यते । यद्यपि ब्रह्मणा भूमिर्विहिता ( शौनकाथर्ववेद १०।२।२५ ) इत्यर्थवणि श्रवणाद् ब्रह्मणा जगत उत्पत्तिः श्रूयते न तु विष्णुना न च शिवेन महादेवेन वेति तथापि तत्र ब्रह्म शब्दः परमात्मनः परब्रह्मणो वाचको वेदितव्यः । नतु पौराणिक कल्पनाप्रकल्पितो देवविशेषब्रह्मवाचक इति । परमात्मा च ब्रह्मा विष्णुर्महेश इति निज शक्तिभेदात् त्रेधा भवन्नप्यभिन्न एक एवावतिष्ठते इति निश्चप्रचं बोध्यम् । आत्मन एकत्वस्यैव वेदेष्वाख्यानात् । तस्माद् वेदानुयायिभिः पुराणकृतं देवभेदमुदस्य निरस्तसमस्तोपाधिक शुद्धं ब्रह्मैव विष्णुशिवब्रह्माभिधानं प्रतिपत्तव्यम् । हन्ताद्य हन्तारोऽन्योन्य शिवभागवताः सदैव शैव मतं प्रतिपद्य विपद्यमानाः । विष्णुभागवताश्चारिजिष्णु विष्णु प्रतिपद्य विपद्यमानाः । ब्रह्माणसम्प्रति सम्प्रतिपन्नास्तु न तथाक्षिलक्षी भवन्ति । ब्रह्मनामकं पुराणं तु प्रतिपक्षपक्षनिक्षिप्त निस्तिष्ठत्येव । समेषामेषामात्यन्तिकं भेदमपाकर्तु भगवान् वेद पुरुष एव समाश्रयणीयः । यत्र एकं सद् विप्रा बहुधा वदन्ति (ऋ. १।१६४।४६) इत्यनपाचा प्राचा वाचा ब्रह्मविष्णुमहेशानां त्रयाणामपि देवानामेकस्मिन्नेव परमात्मनि. समन्वयः समन्वीये ।

मन्येऽमुना लेखेन वैष्णवा वास्तवं विष्णुस्वरूपमवबुध्य बुद्ध्यविरुद्धं सर्वत्रापि शैवादिमतेष्वविरोधं भावयिष्यन्ति । श्रुतिसृति चानुसृत्य कुसृत्युपहतास्तत. पर.ञ्चिष्यन्तीति ।

---

## तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥

अस्मिन् मन्त्रे प्रतिपादितो देवो विष्णुः सूर्य इति व्याचक्षते, बाढम् । सूर्य एवायं विष्णुः, किं तु नासौ लौकिको भवितुमर्हति । कुतः ? यत् प्रत्यह सञ्चारे नभोमध्यं तेनाधिगतं भवति तदेव परमं पदं भवतीति वक्तव्यम् । तच्च सूरयः सर्वदा पश्यन्तीति आह । कथ खमध्यं सर्वदा सूर्यमण्डलाधिष्ठितं भवेत्, यच्च सूरीणामेव गोचरं स्यात्? लौकिकं चेत् सूर्याक्रान्तं पदं तत् असूरिजनस्यापि गोचरं स्यात्, कुतः सूरिजनगोचरमिति वक्तव्यम् ? अलौकिकोऽतीन्द्रियार्थः सूरिजनसाक्षाद्दर्शनविषय इत्यसशयम् । न चेत् काल्पनिकमिदं असम्बद्ध प्रलपितं भवेत् यत् सूरयः सदा खमध्यं सूर्याक्रान्तं पश्यन्तीति । अलौकिकत्वादेव तद् धाम श्रेष्ठं दिवि समन्तात् ततं चक्षुरिव सदा पश्यन्ति सूरयः इत्युक्तम् । क्षीरसागरवासी अनन्तशयनो विष्णुरित्युक्ते, नायमनन्तः कोऽपि प्राकृतः सर्प., न वा क्षीरं च मधुरं पार्थिवं गव्यं, नापि समुद्रो दुग्धवारां राशिः । सर्वव्यापी विष्णुः परिच्छेदशून्ये अनन्ते सद्भावे आनन्दमये नित्ये वस्तुनि अवतिष्ठत इति सङ्केतार्थः । ननु पुराणानां कर्तारः पुरोहिताः जडबुद्धयः सूर्यचन्द्रोपरागतत्त्वस्यापि अनभिज्ञाः कथं गहनानि तत्त्वानि जानीयुः ? साधारण पार्थिव सर्पक्षीरसागरानेव ते ब्रुवते, वयमेव सङ्केतार्थं कल्पयाम इति चेत् नावश्यकी कल्पनाऽस्माभिः कार्या । त एव लाक्षणिकै. शब्दैः सङ्केतकल्पनां मुद्रयित्वा गहनानि तत्त्वानि सार्वलौकिकदर्शनाय ख्यापयामासुः । ते च शब्दाः व्यापको विष्णुः शेषसर्पः अनन्तः आनन्दमयं मधुरं क्षीरं नित्याखण्डसत्स्वरूपः समुद्र इति बोध्याः ।

—कपालिशास्त्रि महाभागाः ।

# कोऽयं विष्णुः

लेखकः : स्वामी समर्पणानन्द जी सरस्वती, (श्री पं बुद्धदेव.)

क्वासौ ग्रामटिका किं वा तद् गिरिशिखरं भारते, यत्र शङ्खचक्रगदापद्मार्चितभुजचतुष्टयस्य भगवतो नारायणस्य देवायतनेषु प्रतिष्ठिता मूर्तिः साञ्जलिबन्ध भूमिं स्पृशता मौलिना न प्रणम्यते प्रत्यहं वैष्णवभक्तैः । सन्ति केचनास्मादृशा अपि ये मूर्तिपूजेयमविद्यामूला प्रसवित्री चाप्यविद्यासन्ततीनामिति सबाहूत्क्षेपम् प्रतिग्रामम्, प्रतिनगरम्, प्रतिघण्टापथञ्च मुहुर्मुहुराघोषयन्ति । तत्र सोऽपि स्यात् कश्चिदुपायो येन सङ्घर्षोऽय समन्वयरूपेण परिणमेदिति चिन्ताप्यार्यजातेर्हितानुध्यानपरायणानाञ्चेतसि सततञ्जागरूका तिष्ठत्येव । तमेव चोपायमद्य विवरीतुकामास्सम्प्रति लेखेनामुना विदुषां चरणसन्निधावुपतिष्ठामहे ।

अनुश्रूयते किल येषामहिनकुलहरिणव्याघ्रादीनां शाश्वतिको विरोधस्तेऽपि भगवतामृषीणामाश्रमाजिरेषु निर्विरोधं वसन्तिस्मेति, तथा च सूत्रितम् भगवता पतञ्जलिनाऽपि "अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः" इति । सोऽयम्मूर्तिपूजकानाम् तत् प्रतिवादिनाञ्च शाश्वतिको विरोधोऽपि भगवतो वेदस्यैव पवित्रे प्राङ्गणे प्रशाम्येतेति विश्रम्भो हृदये पदङ्करोति ।

आपाततो दृढम् बद्धमूलोऽप्ययं विरोधो न दुरुत्खातव्यो यदि प्रतीकप्रत्यायनीयेति शब्दद्वयस्य तत्त्वं हृदिस्थ कृतं स्यात् प्रतीकपूजापरायणै. सहृदयैः ।

एता हि शिवविष्णुविरञ्चिप्रभृतीनाम् मूर्तयः प्रतीकभूता इति तु न दुरवगाहम् । परम् प्रतीकेषु प्रत्यायनीयवचोऽय व्यवहारः स एव कर्मयोगभक्तानां हृदि भूलमुपजनयति । तत्र निदर्शनरूपेणाद्य विवादाय स्वीक्रियनाम् भगवतो नारायणस्येयं शङ्खचक्रगदापद्मोपलक्षिता मूर्तिरेव, तत् कोऽयं विष्णुः । यज्ञो वै विष्णुरिति शतपथे भगवान् याज्ञवल्क्यः । (शत १।३।६।५) । ततश्च कोऽयं यज्ञ इति प्रश्नात् प्रश्नान्तरमुत्पद्यते, तत्र तावदस्य शब्दस्य कथं व्युत्पादनमिति प्रथममन्वेष्टव्यम्, यज्ञशब्दोऽयं नङ् प्रत्ययान्तो यजतेरुत्पन्नः । ( पा. ३।३।९० ) यजतिश्चायम् भ्वादिषु पठ्यते देवपूजा, दानम्, सङ्गतिकरणञ्चेति त्रयोऽस्यार्थाः, तत्र परस्पर सङ्गतेष्वेके दातारो देवा 'दानात्' परे च तत्पूजकाः प्रतिग्रहीतारः । तदित्थं देवपूजादानमित्युभयमपि, सङ्गतिकरणे पर्यवसीयते तत् समानव्रतानां सम्भूय समुत्थानं यज्ञ इति फलितोऽर्थः । तद्यथा राजा यजमानः प्रजा च तत्सहचारिणीत्युभावपि लोककल्याणार्थं यत्र प्रयत्नमाचरतस्तद्राज्यं यज्ञ. । आचार्यस्यादेशमनुवर्तमानानाम् ब्रह्मचारिणां स्वाध्यायार्थ व्रतचर्या यज्ञः । दम्पत्योः प्रजातन्तुसमुच्छेदपरिहाराय कुलव्रतानुपालनाय गृहस्थाश्रमे जीवनयात्रा यज्ञः । तस्मात् कल्याणार्थिना सामुदायिकं योगक्षेममुद्दिश्य समुदायाङ्गतया क्रियमाणं कर्मयज्ञ इति यज्ञलक्षणम् । सोऽयमेव यज्ञो विष्णुः प्रत्यायनीयः ।

शङ्खचक्रगदापद्मविभूषिता च मूर्तिस्तत् प्रतीकभूता । तदत्र प्रतीकप्रत्यायनीययोः कस्संवाद इति पूर्वमालोचनीयम् । अनन्तरम् प्रतीकपूजायाः प्रत्यायनीयपर्यवसायी प्रकारोऽपि स्फुटतां यास्यति । तस्मादादौ शङ्खगदादीनां प्रतीकानां किम् प्रत्यायनीयमित्ययमेव विषयो विवरणमाकाङ्क्षति । तदेव पूर्वमारभ्यते ।

सामुदायिकं योगक्षेममुद्दिश्य समुदायस्याङ्ग-

भूतेषु जनेष्वियम् तत्कालोपस्थितिमयी परस्परं सानुक्रोशता नास्ति तत्र यज्ञस्य मूलमेव समुच्छिन्नं किन्नाम तत्तादृशं सङ्गतिकरण यत्रान्योन्यस्य विपत्तौ तत्प्रतीकारार्थमाहूयमानाः प्रमादं विलम्बं वाऽश्रयन्ते । तस्माच्छङ्खनादसमकालमेव सर्वैरुपस्थातव्यम् । मानवराष्ट्रस्य च "पञ्चजना मम होत्रं जुषध्वम् ।" (ऋक् १०।५३।४) इत्यादि श्रुतिवाक्यैरुपश्लोकिताः ब्राह्मणादयः पञ्चजना अङ्गभूताः तेषामेव घोषः पाञ्चजन्यो घोषः स एवाय विष्णोः शङ्खः । शङ्खध्मानानन्तरमेव च तत्क्षणं स्वकीयानां रथानां चक्रं घोषाभिमुख प्रवर्तनीयम्, रथगतीनामाशुगामित्वेमन्दगामित्वे वा समुदायस्यायतेरवलम्बमानत्वात् । तस्मात् समुदायेन शङ्खध्मानानन्तरं सद्यः संभूय प्रयत्नाय तीव्रगामिनां यानानां संग्रहे कार्यो यत्न इति चक्रपाणिर्भगवान्विष्णुः । तदनन्तरञ्च विपत्प्रतीकारसमर्थानामायुधानामुपलक्षणं गदा । सर्वस्य चास्य तीव्रयानप्रतीकारसमर्थायुधादिसम्भारस्य सग्रहाय पद्मनिवासिनी भगवती पद्मा क्षणादेव स्मृतिपथमारोहति तस्मादेव तन्निवासभूतं पद्मं भगवतश्चतुर्थं भुजमलङ्करोति ।

विद्यमानेऽपि च राष्ट्रकोषे कोटि-कोटि स्वर्णसम्भारे यदि तद्धनमृणादिलब्धं तद्राष्ट्ररूपो विष्णुः सुखनिद्रां न लभते । सुखनिद्रा तु कोषस्यायव्ययतुलनायां शेषेऽवशिष्ट एव लभ्यते तस्मादसौ शेषशायी फणाभूतश्चास्य वार्षिकः शेषः गरुडस्तु वाहनभूतोऽस्य । विष्णुना (समुदायेन) सङ्करणपूर्वकमस्माभिः पञ्चभिर्वर्षैरिदं कार्यमवश्यं सम्पादनीयमिति निर्णीतोऽर्थो गरुडः । असौ हि सर्वमपि राष्ट्रं स्वपृष्ठमारोप्य समुज्ज्वलायति कल्पनामयं कमपि लोकविशेषं प्रापयति । परे शेषस्य गरुडस्य चास्ति शाश्वतिको विरोधः गरुडे पक्षौ प्रसार्य गगनमारुढे राष्ट्रकोषस्य शेषो निःशेषतां याति । शेषपरिपालनपरायणानान्तु पराक्रमो दुर्लभः विना च पराक्रमं कथं विजयः । तदनयोः शाश्वतिकविरोधवतोर्नियमने प्रभुरेव जगन्नाथ पदवीं भजते ।

कोटिकोटिस्वर्णसम्भारेऽपि च कोषे विद्यमाने दरिद्रमेव राष्ट्रम् । नहि बुभुक्षितैः स्वर्णगुटिका भक्ष्यते । तस्मादाहारशेष एव पारमार्थिकः शेषः । प्रधानञ्चाहाराणां क्षीरमेव तस्मात् क्षीरसागरे शेषः, शेषे च विष्णुः सुखशयनिकामास्ते । अत एव च सुरासागरे चायसागरे काफीसागरे गुडगुडीसागरे च मग्नानां कथ विष्णुसेवा लाभः स्यात् ।

अपि च जयो विजयश्चेति द्वौ विष्णोर्द्वारपालौ । उत्कृष्टे समुदाये प्रविविक्षवो द्वार्येव प्रश्नद्वयमनुयुज्यन्ते । अपि लब्ध. कस्मिंश्चिदपि शास्त्रे कस्याञ्चिदपि कलायां वा मर्मज्ञपरिषदि परीक्षाकाले जयः। यद्वा लब्धः कुत्रापि युद्धे विजयः ।

यद्युभयमपि नास्ति तद् द्वाराद् बहिरेव स्थीयताम् । अद्यत्वे तु रिश्वतसिफारिशनामानौ द्वारपालौ प्रतिद्वारं प्रतिष्ठितौ । तस्मात् सर्वत्रासुरीमायाऽसुराणाञ्च दर्शनम् । ईदृशाम् कर्महीनानान्तु विष्णोर्दर्शनमपि न लभ्यम् कुतस्सेवा ।

तदेवं सामुदायिकं योगक्षेममुद्दिश्य लंकाविजयाय प्रस्थितो भगवान् रामचन्द्रो विष्णोरवतार इति कथ्यते तेन हि परमवैष्णवेन लंकाविजयानन्तरं लंकाराज्यं पुनर्लङ्कावासिभ्यः एव समर्प्य 'इदन्नममेति' यज्ञगतं त्यागवाक्यं सार्थक्यमानीतम् ।

अहो विडम्बना ! तस्यैव भगवतो मन्दिरे समुच्चरति "रघुपति राघव राजाराम पतित पावन सीतारामेति" मधुरः पुण्यश्च ध्वनिः । इमञ्च शंखनादमाकर्ण्य चर्मकारकुलजन्मा कोऽपि मन्दिरे दर्शनार्थं प्रवेश याचते । गलग्राहिकया चासौ निवार्यते

प्रवेशात् वैष्णवरेखाङ्कितललाटैर्वैष्णवम्मन्यैः ।

चर्मकारः—आर्य ! कथन्न मे प्रवेशं ददासि ?

वैष्णवः—ननु पतितस्त्वम् ।

चर्मकारः—भगवन् ! इदमेव मे प्रवेशकारणं पतितोऽहं भगवांश्च पतितपावनः । किम् भवानपि पतितः ?

वैष्णवः—धिङ्मूर्ख ! किमनेन प्रमत्तप्रलापेन ब्राह्मणः खल्वह कथमहं पतितः ।

चर्मकारः—आर्य ! यद्येवं तत्त्वं पलायस्व पतितपावनस्य गृहात् पतितानामेवात्र मादृशां पतितपावनस्य सन्निधावस्तु निवासः । नहि व्याधिग्रस्तः खलु निवार्यते प्रवेशादातुरालयेषु ।

हंहो पतितपावनी भगवती सीता, पतितपावनश्च भगवान् रामचन्द्रो येन कपिकल्पा वानरजातीया मनुष्याः अपि तथा सैन्यशास्त्रे पारङ्गतत्वमानीताः यत्तेषामेव साहाय्येन पराजितो रावणो विजिता च लंकापुरी । धन्यास्ते वेदचतुष्टयो पारङ्गता ब्रह्मपदवीभाजो ब्राह्मणाः यैरादिष्टम् ।

किन्नरीणाञ्च गात्रेषु वानरीणां तनूषु च
सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ।।

बाल्मीकि. अयोध्या कांड १७ ५

तद्यदि सामुदायिकं योगक्षेममुद्दिश्य सामुदायिकधर्माः परिपाल्यन्ते ततो नास्माकं कापि विप्रतिपत्तिः । यदि तु शंखचक्रगदापद्मधारिण्या मूर्तेर्जलेनाभिषेक एव वैष्णवो धर्मस्तदेषा प्रतीकपूजा लोकक्षयकरी जातिहितचिन्तापरायणाना यथार्थवैष्णवाना शिरः शूलमुत्पादयति ।

अयमपरो गण्डस्योपरि स्फोटः । ये स्वजातेरङ्गभूतानां पतिताख्यानां पुरुषाणां पतितपावनस्य मन्दिरे प्रवेशं प्रत्याचक्षते त एव तारतमेन स्वरेण—

'रघुपति राघव राजाराम पतितपावन सीताराम ।'

इति कीर्तनवाक्यमुच्चारयन्ति । तत्परिवर्तनीयमिदं कीर्तनवाक्यम्—

'रघुपति राघव राजाराम धक्का देवण सीताराम ।'

इति भवतां कीर्तनवाक्यमस्तु । यद्वा व्यजतामयं समुदायक्षयकरो वैष्णवत्वविध्वंसकरः भक्तजनप्रवेशप्रत्याख्यानात्मको जघन्यो व्यापारः ।

तत्कोऽयं विष्णुः ? यज्ञ इति ।

कोऽयं यज्ञः ? सामुदायिको योग-क्षेम इति ।



अयि भद्रास्तु भद्रं ते, विष्णवंको भद्रमश्नुयात् ।
अहं तावन्न शक्तः स्यां, समयाभाव-बाधितः ।।१।।
किमपि प्रेषितुं वस्तु, प्रकाश्यं नाम यद् भवेत् ।
अतो म आशिषः सन्ति, हार्दिकीर्भवदर्पिताः ।।२।।

—विश्वबन्धोः ।



# "विष्णोः कर्माणि पश्यत"

श्रीजगदीशचन्द्रः शास्त्री, दर्शनाचार्य, यमुनानगरम्

वेदेषु बहुधा निगद्यमानं श्रूयते—'विष्णो कर्माणि पश्यत' इति। तेन प्रतीयते कश्चित् विष्णुरस्ति, स च कानिचित् बहूनि कर्माण्यपि करोति, तस्य च कर्माणि द्रष्टु योग्यानि वर्तन्ते—न केवलमेतदेवापितु तस्य कर्मणां दर्शनमवश्यमेव कर्तव्यमित्याज्ञापि सूच्यते।

'पश्यत'—भो भो चक्षुष्मन्त', दर्शनकुशलाः विद्वांस. ! इत आगच्छत, आगत्य च पश्यत। अत्र किंचिदद्भुतं दर्शनीयं वस्तु विद्यते, तत् पश्यत, अस्मिन् बहुविस्तृते संसारे बहुदर्शनीय विद्यते—भवनानां समूहाः सन्ति, नगराणां समूहाः सन्ति, सेतूनां समूहाः सन्तिः, मार्गाणां च समूहा. सन्ति। किं बहुना पुस्तकानां, वस्त्राणां, वर्तनानां, यन्त्राणां, तन्त्राणां, भोज्यानां, भोग्यानां, पेयानां, गेयानां, गेहानां, स्नेहानां, स्नेहेन स्निग्धानां चानन्त्य विद्यते वैविध्यं च विद्यते। एतत्सर्वं दर्शनीयमस्ति, परमेतस्मात् सर्वस्मादुत्तरमन्यदपि किंचिदस्ति तच्चैभ्यो भोग्येभ्यः भोगसाधनेभ्यश्चातितरां दर्शनयोग्यं विद्यते, तस्यापि दर्शनं कुरुत। यद्यपीमानि नगरादीनि गेहस्नेहस्निग्धानि रुचिकराणि बहूनि वस्तूनि चक्षुः गोचराणि भवन्ति, तथापि सूर्यचन्द्रादि नक्षत्राणां, पर्वतनदीवनाना, वायुविद्युज्जलधराणां चापि दर्शनं भवति। सूर्यस्याद्वितीयः प्रखरः प्रकाशः, चन्द्रमसः मनोरमोल्लासः कलानां च संकोचविकासः, नक्षत्राणां बहुविधाकारः वैचित्र्ययुक्तश्च गतिप्रकारः, पर्वतानां विविधामालाः, वनानां वनस्पति लता कुसुमादियुक्तोऽनेकविधः सम्भारः, नदीनां जलप्रवाहः, वायोर्वेगः, विद्युतश्चाद्भुतः प्रकाशः जलधराणां च वृष्टिधाराः—एवं बहुविधाः पदार्था अपि विद्यन्ते येऽस्माकं सर्वेषां चेतांसि चक्षूषि च स्वोन्मुखीकुर्वन्ति। तत्तावदेतेषामपि दर्शनं कर्तव्यम्।

नगरादीनि सेतुमार्गादीनि यन्त्रतन्त्रादीनि च वस्तूनि मनुष्यकृतानि कर्माणि सन्ति—तेषां दर्शनेन ज्ञायते केनापि बुद्धिमता कलाकारेण मनोयोग पूर्वकमेतानि रचितानीति।

अथेदानी विचार्यते — सूर्यचन्द्रनक्षत्रादयः ज्योतिष्मन्तो लोकाः केन रचिता., नदीनां वनाना पर्वताना च को निर्माता। एतस्मिन् विषये वेदो निवेदयति प्रतिपादयति च — एतानि सर्वाणि "विष्णो. कर्माणि" सन्ति। विष्णुश्च जगत्कर्ता परमेश्वर'। वेवेष्टि व्याप्नोति सकलं जगत्—इति विष्णु। स च जगतां कर्ता जगदीश्वरस्य तस्य विष्णोर्व्यापकस्य जगदीश्वरस्य त्रीणि मुख्यानि कर्माणि विक्रमणानि सन्ति, यथा च देवे—

> विष्णोर्नुकं वीर्याणि प्रवोचम्
> य पार्थिवानि विममे रजांसि।
> यो अस्कभायदुत्तर सधस्थम्
> विचक्रम।णस्त्रेधोरुगायः ॥ ऋ ॥

(१) विष्णो. = व्यापकस्य परमेश्वरस्य वीर्याणि = वीरता साध्यानि बहूनि कर्माणि। नु कं = अवश्यमेव प्रसन्नतापूर्वकं, प्रवोचम् = प्रकर्षेण प्राबल्येन वा व्याख्यातुमिच्छामि।

व्यापकस्य परमेश्वरस्य यानि कर्माणि सन्ति तानि वीरता साध्यानि सन्ति—तेषु कर्मसु दृष्टिपातं विधीयते चेत्तदावश्यं स्वीकरणीयं भवति यत्तेषां कर्ता रचयिता निष्पादयिता वा कश्चित् वीरतमः विद्यते, न हि तेषां रचने निष्पादने च कोऽपि हीनबल' सीमासम्पन्नोऽव्यापकः समर्थो भवितुं शक्नोति।

कानि तानि वीरता साध्यानि कर्माणि यानि व्यापको निस्सीम एव कर्ता कर्तुं शक्नोतीति चेत्? मन्त्रोऽभिवदति।

(२) यः पार्थिवानि विममे रजांसि—पृथिवी

मुख्याः लोकाः येन विरचिताः ।

"रजासि लोका उच्यन्ते ।।" ( शतपथे ) इयमस्माक पृथिवी विशतिसहस्रयोजनपरिमिता श्रूयते । अन्येऽपि पृथिवीसदृशाः बहवो लोका सन्ति ते चानन्ता इत्यपि ज्योतिर्विदः कथयन्ति । तेषां सर्वेषां पृथिवीलोकानां विमानं वैशिष्ट्यमुद्दिश्य निर्माणं कृतम् — तेषां निर्माणे वैचित्र्यमपि संलक्षितम् । एवं परस्परं भिन्ना विचित्राः दूराद्दूरे वर्तमाना परिभ्राम्यमानाश्च महान्तोऽनन्ताः पृथिवी लोकाः विरचिताः सन्ति । तेषां रचन विशेषेण निर्माणं केनचिदलौकिकेन बुद्धिमता कर्तु शक्यम् । कोऽसावलौकिकः बुद्धिमान् कर्तेति जिज्ञासाया मन्त्र. समादधाति विष्णुः सर्वव्यापकः परमेश्वर एव तेषां पृथिवी लोकानां रचयिता निर्माता चास्तीति ।

(३) यः अस्कभायत् उत्तरं सधस्थम्— विष्णुना सर्वव्यापकेन परमेश्वरेणोर्ध्वस्थितानां प्रकाशमानानां लोकानां समूहोऽपि नियमैर्निबद्धस्तिष्ठति । यस्मादुपरिभागे वर्तमानाः निशायां प्रकाशमानाः सूक्ष्माकारैः प्रतीयमानाश्च सूर्याः परस्परसापेक्षनियमेन बद्धाः—सुदृढं बद्धाश्चलन्ति तस्मात् सधस्थाः उच्यन्ते, सह तिष्ठन्ति परस्परमपेक्षन्त एव गतिं कुर्वन्तीति विज्ञापनार्थं मन्त्रेण 'सधस्थ'—इत्यस्य पदस्य प्रयोग. कृतः । एते महान्तो लोकाः स्वतन्त्राः न सन्ति, न च तेषा भ्रमणं गमनं वा स्वाभाविकम् किन्तु परस्परापेक्षापूर्वकमेवास्तीति न विस्मर्तव्यम् ।

एतेषां महतां लोकानां मालाकारे ग्रन्थीकरणं केनचित् परमवैज्ञानिकेनैव कर्तुं शक्यमिति । कस्तावदेवंविधः परमवैज्ञानिको भवितुमर्हति सर्वव्यापकेन परमेश्वरेण विना—तस्मादनेनैव हेतुना विष्णु शब्दोऽत्र व्याहृतः । अत एव उपरिस्थितानां लोकानामपि धारणं नियमैः नियन्त्रणं च विष्णुना परमेश्वरेणैव कृतम् । चेत् परमेश्वरः सर्वव्यापकः विष्णुर्न स्यात्, कथं तर्हि तेषां लोकानां सहस्थानं सहावस्थानं वा शक्यं भवेत् ।

(४) विचक्रमाण. त्रेधा—समस्तोऽयं संसारः न केवलं क्रममाण. प्रतीयते किन्तु विशेषरीत्या विचित्ररीत्या च क्रमत इत्यपि सलक्ष्यते । पुनः पुनः विक्रमते च एतस्य सर्वस्य भ्रमणप्रकारस्य कोऽप्याविष्कर्ता अस्ति । एतस्य सर्वस्य सक्रमणप्रकारस्य कोऽपि संक्रमणकारकोऽस्ति । सः भ्रमणकारकः सक्रमणकारकः—विष्णुरेवास्ति—सर्वव्यापकत्वात् परमेश्वर एवैतत्पराक्रम कर्तु शक्नोति ।

पृथिवीलोकाना सूर्यलोकाना च संक्रमणं विक्रमण च मध्यवर्तिनान्तरिक्षेणैव साधयितु सुसम्पादयितुं च शक्यम् । लोकानां मध्यभागे चेदाकाशः न स्यात्तदा तेषां भ्रमणं सक्रमणमपि न सम्पद्येत । अत गत्याः त्रयः प्रकाराः सन्ति ।

१. लोकस्य स्वकीयपरिधिं परितो वृत्वा भ्रमणम् ।
२ लोकस्य स्वस्थानं परित्यज्यान्तरिक्षेऽन्यत्र गमनम् ।
३. एकस्य लोकस्य कस्यचिदन्यस्य सूर्यस्य परिक्रमणम् ।

एतत्सर्वं व्यापकेन परमेश्वरेण—विष्णुनैव कर्तु सम्भाव्यते । एतानि त्रीणि कर्माणि विष्णुरेव करोति, कर्तु च शक्नोतीत्युद्दिश्य निगद्यते—"त्रेधा विचक्रमाण"—इति । अथवा अस्य संसारस्य 'जन्म स्थिति लयानां करणमपि व्यापकेन विष्णुना परमेश्वरेणैव शक्यमित्यपि—त्रेधा विचक्रमाणः निगद्यते ।

एतस्माद्धेतोः विष्णुरयमुरुगायः कथ्यते । यस्य बहूनि गानानि सन्ति । यः बहुभिः सर्वैः जनैः गीयते गातु वा योग्योऽस्ति ।

एवं सः सर्वव्यापकः परमेश्वरः जगतामुत्पत्तिस्थितिलयकारकत्वात् परिभ्रामकत्वात् संचालकत्वाच्च विष्णुपदवाच्योऽस्तीति वेदस्याभिप्रायः । तेनैव च विष्णुना वीरतासाध्यानि विचित्राणि कर्माणि कृतानि । विद्वांसः! तस्य 'विष्णोः कर्माणि पश्यत'—इति शम् । —०—

# ईशो विष्णोर्महिमोपदेशश्च

मुनि श्रीमेधाव्रताचार्य आर्यकवीन्द्रः

### मालिनी

निगमविमलगंगातीरमागम्य रम्यं
प्रभुरसफलविद्यारण्यपुण्यं प्रशान्तम् ।
सकलभुवनलोकाः ? शोकमोकं कुरुध्वं
वरमिति वदति द्रागीशसन्देश एषः ॥१॥

व्रतिगृहिमुनिजीवन्मुक्तसंन्यासिवर्यै-
र्मनुजजनिहितार्थं यत्र संस्नातमार्यैः ।
विभुवरशिवसंगां वेदगंगां मुदाऽमूं
श्रयत गदति चैवं देवसन्देशमन्त्रः ॥२॥

### स्रग्धरा

वस्तूनां तत्त्वरूपं प्रकृतिगुणयुतं
चेतनाचेतनानां
धर्मान् वर्णाश्रमाणां रुचिकरकलया
वर्णयन्मंगलार्थान् ।
ईशोपास्यत्वबुद्धिं जनहृदि जनयन्
नार्षवाचां प्रवाहै-
र्दिव्यादेशं विभोर्वो जयतु स वितरन्
मंत्रसन्दोहदूतः ॥३॥

### मन्दाक्रान्ता

ईशावास्यं जगदिदमहो !!
यच्च किञ्चिज्जगत्यां
भुञ्जीथास्त्वं सह वितरणै-
स्तेन देवेन दत्तम् ।
कस्मिल्लक्ष्मीः स्थिरतरपदान्-
वन्यतो मा गृधस्तां
भद्रादेशं जयतु वितरन्
देवसन्देश इत्थम् ॥४॥

### स्रग्धरा

कुर्वन्नेवेह कर्माण्यमलमतिजनो
जीवितुं कामयेत
निष्कामः पुण्यशीलः शतमधिकसमा
ब्रह्मनिष्ठो मनीषी ।
लिप्येतैवं न पापै र्जलजमिवजलै-
र्नान्यथेतोऽस्ति पन्था-
दिव्यादेशं प्रभोर्वो जयतु स वितरन्-
मन्त्रसन्देशवाहः ॥५॥

### मालिनी

प्रभुवरपरमात्मज्ञानरूपश्रुतीना-
मनुपदमथवा स्वस्वच्छरूपात्मनो ये ।
विदधति विपरीतां दुष्क्रियां निन्दनीयां
मनुजतनुमपीताः पुण्यपण्येन लभ्याम् ॥६॥

असुरगणनिषेव्यानन्धकारावृताँस्ते
मतिरविरुचिहीनान् घोरदुःखांकलोकान् ।
प्रतिपलजनिमृत्यून् प्रेत्य यान्तीति मूढान्
निगदति निगमान्तो मन्त्रसंगीतवाद्यैः ॥७॥

### इन्द्रवज्रा

गत्या विहीनोऽप्ययमद्वितीयो-
ब्रह्मात्मदेवो मनसो जवीयान् ।
सन्तं तमर्थेष्वपि नेन्द्रियाणि
प्राप्तुं समर्थानि समर्थमोतम् ॥८॥

### उपजातिः

वायूपमान् धावत एव जन्तू-
नत्येति सर्वत्र स विद्यमानः ।
ध्रुवं स्थिरोऽन्यांश्चपलानुपातान्
दिव्यान् पदार्थानपि देवदेवः ॥९॥

मुख्याः लोकाः येन विरचिताः ।

"रजांसि लोका उच्यन्ते ।।" ( शतपथे )

इयमस्माक पृथिवी विंशतिसहस्रयोजनपरिमिता श्रूयते । अन्येऽपि पृथिवीसदृशाः बहवो लोका सन्ति ते चानन्ता इत्यपि ज्योतिर्विदः कथयन्ति । तेषां सर्वेषां पृथिवीलोकानां विमानं वैशिष्ट्यमुद्दिश्य निर्माणं कृतम् — तेषां निर्माणे वैचित्र्यमपि सलक्षितम् । एवं परस्परं भिन्नाः विचित्राः दूराद्दूरे वर्तमाना परिभ्राम्यमानाश्च महान्तोऽनन्ताः पृथिवी लोकाः विरचिताः सन्ति । तेषां रचन विशेषेण निर्माणं केनचिदलौकिकेन बुद्धिमता कर्तुं शक्यम् । कोऽसावलौकिकः बुद्धिमान् कर्तेति जिज्ञासायां मन्त्रः समादधाति विष्णुः सर्वव्यापकः परमेश्वर एव तेषां पृथिवी लोकानां रचयिता निर्माता चास्तीति ।

(३) यः अस्कभायत् उत्तरं सधस्थम्—विष्णुना सर्वव्यापकेन परमेश्वरेणोर्ध्वस्थितानां प्रकाशमानानां लोकानां समूहोऽपि नियमैर्निबद्धस्तिष्ठति । यस्मादुपरिभागे वर्तमानाः निशायां प्रकाशमानाः सूक्ष्माकारैः प्रतीयमानाश्च सूर्याः परस्परसापेक्षनियमेन बद्धाः—सुदृढं बद्धाश्चलन्ति तस्मात् सधस्थाः उच्यन्ते, सह तिष्ठन्ति परस्परमपेक्षन्त एव गतिं कुर्वन्तीति विज्ञापनार्थं मन्त्रेण 'सधस्थ'—इत्यस्य पदस्य प्रयोगः कृतः । एते महान्तो लोकाः स्वतन्त्राः न सन्ति, न च तेषां भ्रमणं गमनं वा स्वाभाविकम् किन्तु परस्परापेक्षापूर्वकमेवास्तीति न विस्मर्तव्यम् ।

एतेषां महतां लोकानां मालाकारे ग्रन्थीकरण केनचित् परमवैज्ञानिकेनैव कर्तुं शक्यमिति । कस्तावदेवंविधः परमवैज्ञानिको भवितुमर्हति सर्वव्यापकेन परमेश्वरेण विना—तस्मादनेनैव हेतुना विष्णु शब्दोऽत्र व्याहृतः । अत एव उपरिस्थितानां लोकानामपि धारणं नियमैः नियन्त्रणं च विष्णुना परमेश्वरेणैव कृतम् । चेत् परमेश्वरः सर्वव्यापकः विष्णुर्न स्यात्, कथं तर्हि तेषां लोकानां सहस्थानं सहावस्थानं वा शक्यं भवेत् ।

(४) विचक्रमाण. त्रेधा—समस्तोऽयं संसारः न केवलं क्रममाण. प्रतीयते किन्तु विशेषरीत्या विचित्ररीत्या च क्रमत इत्यपि सलक्ष्यते । पुनः पुनः विक्रमते च एतस्य सर्वस्य भ्रमणप्रकारस्य कोऽप्याविष्कर्ता अस्ति । एतस्य सर्वस्य सक्रमणप्रकारस्य कोऽपि सक्रमणकारकोऽस्ति । सः भ्रमणकारकः सक्रमणकारकः—विष्णुरेवास्ति—सर्वव्यापकत्वात् परमेश्वर एवैतत्पराक्रमं कर्तुं शक्नोति ।

पृथिवीलोकानां सूर्यलोकानां च संक्रमण विक्रमण च मध्यवर्तिनान्तरिक्षेणैव साधयितु सुसम्पादयितुं च शक्यम् । लोकानां मध्यभागे चेदाकाशः न स्यात्तदा तेषा भ्रमणं सक्रमणमपि न सम्पद्येत । अतः गत्याः त्रयः प्रकाराः सन्ति ।

१. लोकस्य स्वकीयपरिधिं परितो वृत्वा भ्रमणम् ।
२. लोकस्य स्वस्थानं परित्यज्यान्तरिक्षेऽन्यत्र गमनम् ।
३. एकस्य लोकस्य कस्यचिदन्यस्य सूर्यस्य परिक्रमणम् ।

एतत्सर्व व्यापकेन परमेश्वरेण—विष्णुनैव कर्तुं सम्भाव्यते । एतानि त्रीणि कर्माणि विष्णुरेव करोति, कर्तुं च शक्नोतीत्युद्दिश्य निगद्यते—"त्रेधा विचक्रमाण"—इति । अथवा अस्य संसारस्य 'जन्म स्थिति लयानां करणमपि व्यापकेन विष्णुना परमेश्वरेणैव शक्यमित्यपि—त्रेधा विचक्रमाणः निगद्यते ।

एतस्माद्धेतोः विष्णुरयमुरुगायः कथ्यते । यस्य बहूनि गानानि सन्ति । यः बहुभिः सर्वैः जनैः गीयते गातुं वा योग्योऽस्ति ।

एवं सः सर्वव्यापकः परमेश्वरः जगतामुत्पत्तिस्थितिलयकारकत्वात् परिभ्रामकत्वात् संचालकत्वाच्च विष्णुपदवाच्योऽस्तीति वेदस्याभिप्रायः । तेनैव च विष्णुना वीरतासाध्यानि विचित्राणि कर्माणि कृतानि । विद्वांसः! तस्य 'विष्णोः कर्माणि पश्यत'—इति शम् ।

—०—

# ईशो विष्णोर्महिमोपदेशश्च

मुनि श्रीमेधाव्रताचार्य आर्यकवीन्द्रः

### मालिनी

निगमविमलगंगातीरमागम्य रम्यं
प्रभुरसफलविद्यारण्यपुण्यं प्रशान्तम् ।
सकलभुवनलोकाः ? शोकमोकं कुरुध्वं
वरमिति वदति द्रागीशसन्देश एषः ॥१॥

व्रतिगृहिमुनिजीवन्मुक्तसंन्यासिवर्यै-
र्मनुजजनिहितार्थं यत्र संस्नातमार्यैः ।
विभुवरशिवसंगां वेदगंगां मुदाऽमूं
श्रयत गदति चैवं देवसन्देशमन्त्रः ॥२॥

### स्रग्धरा

वस्तूनां तत्त्वरूपं प्रकृतिगुणयुतं
चेतनाचेतनानां
धर्मान् वर्णाश्रमाणां रुचिकरकलया
वर्णयन्मंगलार्थान् ।
ईशोपास्यत्वबुद्धिं जनहृदि जनयन्
नार्षवाचां प्रवाहै-
र्दिव्यादेशं विभोर्वो जयतु स वितरन्
मंत्रसन्दोहदूतः ॥३॥

### मन्दाक्रान्ता

ईशावास्यं जगदिदमहो !!
यच्च किञ्चिज्जगत्यां
भुञ्जीथास्त्वं सह वितरणै-
स्तेन देवेन दत्तम् ।
कस्मिल्लक्ष्मीः स्थिरतरपदान्-
वन्यतो मा गृधस्तां
भद्रादेशं जयतु वितरन्
देवसन्देश इत्थम् ॥४॥

### स्रग्धरा

कुर्वन्नेवेह कर्माण्यमलमतिजनो
जीवितुं कामयेत
निष्कामः पुण्यशीलः शतमधिकसमा
ब्रह्मनिष्ठो मनीषी ।
लिप्येतैवं न पापै र्जलजमिवजलै-
र्नान्यथेतोऽस्ति पन्था-
दिव्यादेशं प्रभोर्वो जयतु स वितरन्-
मन्त्रसन्देशवाहः ॥५॥

### मालिनी

प्रभुवरपरमात्मज्ञानरूपश्रुतीना-
मनुपदमथवा स्वस्वच्छरूपात्मनो ये ।
विदधति विपरीतां दुष्क्रियां निन्दनीयां
मनुजतनुमपीताः पुण्यपण्येन लभ्याम् ॥६॥

असुरगणनिषेव्यानन्धकारावृतांस्ते
मतिरविरुचिहीनान् घोरदुःखांकलोकान् ।
प्रतिपलजनिमृत्यून् प्रेत्य यान्तीति मूढान्
निगदति निगमान्तो मन्त्रसंगीतवाद्यैः ॥७॥

### इन्द्रवज्रा

गत्या विहीनोऽप्ययमद्वितीयो-
ब्रह्मात्मदेवो मनसो जवीयान् ।
सन्तं तमर्थेष्वपि नेन्द्रियाणि
प्राप्तुं समर्थानि समर्थमीतम् ॥८॥

### उपजातिः

वायूपमान् धावत एव जन्तू-
नत्येति सर्वत्र स विद्यमानः ।
ध्रुवं स्थिरोऽन्यांश्चपलानुपातान्
दिव्यान् पदार्थानपि देवदेवः

शार्दूल०

सत्तायां परमेश्वरस्य पवनो
मेघादिरूपं जलं
प्राणः सन् वपुषीह कर्म विविधं
भिन्नोऽथवा पञ्चधा ।
सूत्रात्मा मरुदेश वोर्ध्वगमनाद्याः
स्वक्रियाः सर्वदा
धत्ते जीव उतोदरे श्वयति वा
मातुर्विभोराज्ञया ॥१०॥

मालिनी

अचलदपि चलत्तद् ब्रह्म संराजमानं
सकलजगति वेत्ति ज्ञानशून्यो मनुष्यः ।
न चलति परमेतद् वस्तुतः प्राणरूपं
रचयदपि रवीन्दुप्रोज्ज्वलां रम्यसृष्टिम् ॥११॥

मालिनी

प्रकृतिपरमसूक्ष्मे प्रत्यणौ व्यापकं तद्
वितरति गतिमस्यै स्वीयसंकल्परूपाम् ।
गतिरहितमपीमां भ्रामयन्मण्डलेन
प्रकृतिमखिलसृष्ट्यै प्रेरयत्येवमीशः ॥१२॥

शार्दूल०

तद्दूरे शतजन्मनाऽपि विषया-
सक्तैरलभ्यं जनै-
रासन्ने तदनन्तसौख्यनिलयं
संसारतृष्णामुचाम् ।
सर्वस्यान्तरिदं चराचरजगज्-
जातस्य बाह्ये स्थितं
विश्वस्माच्च निराकृतित्वविततं-
त्वाभ्यां समं सर्वतः ॥१३॥

शार्दूल०

उद्भूतानि चराचराणि परमात्-
मन्येव भूतानि यो-
व्याप्तानि क्रमशः शमादिचरणः
संवीक्षते संयमी ।
विश्वेष्वीश्वरमात्मसाक्षिणमथा-
ऽऽधार प्रियं रक्षकं
तस्मान्नैव तनोति निन्दितकृतिं
पूज्याग्रतः पुत्रवत् ॥१४॥

मन्दाक्रान्ता

ब्रह्मज्ञानी विमलहृदि यः प्राणिनस्स्वानुकूलान्
पश्यत्यार्यः प्रियतम इव प्रेमदृष्ट्या समग्रान् ।
यश्चावैति प्रतितनुधरं स्वात्मतुल्यं सुखेप्सुं
तस्य स्वाङ्गादिव परतनोर्नो घृणा जानतः स्यात् ॥१५

वंशस्थ०

अभीष्टवस्तुप्रतिबद्धचेतसा
यथेक्ष्यतेऽशेषजगत्सु तन्मयम् ।
तथा समाधौ परमात्मयोगिना
निरीक्ष्यते ह्यात्ममयं चराचरम् ॥१६॥

वंशस्थ०

परात्मरूपं परिपश्यतो यते-
श्चराचरे सृष्टपदार्थमण्डले ।
समाधिभाजस्समतादृशस्तदा
क्व मोहशोकौ पुरतो नु तिष्ठतः ॥१७॥

# वैष्णवं-चिन्तनम्

श्री औदुम्बरकरः

विदित एव खल्वयमर्थः सर्वेषामपि विदुषां यत् किल जगन्नियन्त्रकं पारमेश्वरं तत्त्व यथा भारतीयानां सारस्वते प्रतिपादित नैवमन्यत्र क्वापीति। भारतीयानां च निरतिशयप्रमाणभूता ग्रन्था नाम वेदा एव। तन्मूलकत्वेनैव स्मृतिपुराणादीनां प्रामाण्यम्। यच्च वेदविरोधि तत्पुनस्त्याज्यमेवेति निश्चिन्वते श्रुतिमात्रनिष्ठा भारतीयाः। सृष्टिनिर्माणविधौ सर्वाद्यतमाः खलु श्रुतयः। तथाहि आर्चिके पौरुषे सूक्ते—

तस्माद् यज्ञात् सर्वभृत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत॥

इति सर्वादौ वेदानामाविर्भावमुद्‌घोष्य तदनन्तरमेव अश्व-गो-मेध-च्छाग-ब्राह्मणादिवर्णाः सञ्जाता इति प्रत्यपादि। श्रुतय एव सर्वं ज्ञानविज्ञानानां मूलमिति मन्यन्ते भारतीयाः। 'सर्वं वेदात् प्रसिध्यति।' इत्यभियुक्तोक्तिरेतदेव कथयति। विशेषतः खलु यज्ञार्थमेव वेदानामवतारः। यज्ञश्च नाम परमात्मन उपासना। परमात्मनो ज्ञानमेव परमश्रेयसो मोक्षाख्यस्य सम्पादकमिति 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिः प्रतिपादयति। सर्वव्यापकः परमात्मैव भगवान् विष्णुः। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुत्या विष्णुपदार्थो विज्ञायते। विशतीति विष्णुरिति व्यापक इत्यर्थः।

श्री भगवान् विष्णुः स्वभक्तपरित्राणाय दुष्टविदलनाय च तदा तदावतारान् जग्राहेति प्रतिपाद्यते पुराणेषु। तस्य मूलं वेदेषु सम्प्राप्यते। श्रीविष्णोः स्वरूपं सामर्थ्यं सर्वव्यापकत्वमपि पुराणादिषु प्रतिपाद्यते। तदपि वेदेष्वेव प्रथमं सन्दृश्यते। तथाहि ऋक्संहितायां विष्णुसूक्तेषु—

### विष्णोः परमात्मस्वरूपत्वम्

'विष्णो देव त्वं परमस्य वित्से।' 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप।'

अत्र हि विष्णुः परमात्मा अगम्यमहिमा इति निरूपितम्।

### विष्णोः सर्वव्यापकत्वम्

नारायणोपनिषदि 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥'

### विष्णोः सर्वशक्तिमत्वम्

ऋग्वेदे पवमानमण्डले—

'एष सूर्यमरोचयत्पवमानो विचर्षणिः।
विश्वा धामानि विश्ववित्॥

अत्र हि विष्णु विश्वप्रकाशकस्य—
सूर्यस्यापि प्रकाशक इत्युक्तम्॥

### विष्णोर्महान्ति कर्माणि

विष्णुसूक्तेषु 'उरुक्षितिं सुजनिमाचकार' इत्येतस्मिन् वाक्ये पृथिव्याः समृद्धये अयमवततार परमात्मा इति सूच्यते। पावमानमण्डले च स्पष्टमेव श्रूयते—'हरिः सन्योनिमासदत्।' हरिर्विष्णुर्जन्म लब्धवानित्यर्थः।

आर्चिकेषु विष्णुसूक्तेषु च विष्णोर्वामनावतारवर्णनं सुस्पष्टतया व्यज्यते—

### वामनरूपिणो विष्णोर्यज्ञे गमनम्

'बृहच्छरीरो विमिमान ऋक्वभिर्युवा कुमारः प्रत्येत्याहवम्।' अत्र युवा कुमारः आहवं नामयज्ञं प्रत्येति गच्छतीति वामनवटोर्यज्ञे गमनं व्यज्यते।

### त्रिभिः पदक्रमैर्विश्वस्याक्रमणम्

'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।'
'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः।'
'विचक्रमाणस्त्रेधोरुगायः।'
'यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।'

य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ।'

इत्यादिभिश्च वाक्यैः पौराणिकैः प्रतिपाद्यमानो वामनरूपिणो विष्णोर्विक्रमः सूच्यते । अन्यत्रापि — 'त्रिर्देवः पृथिवीमेष एतां विचक्रमे' ( ऋक् ) इत्यभ्यधायि ।

अयं च परमात्मा जगत्त्राणार्थमेव अवतारादिकं धारयति। तथा हि–विष्णुसूक्तेषु—

'तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीढुषः ।' इत्यत्र वज्रेण युध्यमानस्य ( सोमस्य= ) अन्नस्य सरक्षितुः अयं बलविभवोऽस्माभिः स्तूयते ( तत् तद् अस्य विष्णोः पौंस्यं = बलं गृणीम=गिरा वर्णयामः ) इति प्रत्यपादि । तथा चैतावान् विष्णुः संसेव्य एवेत्याह भगवान् वेदः– 'महे शूराय विष्णवे चार्चत ।' (विष्णुसू०) ।

'अथा ते विष्णो विदुषाचिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ।' ( विष्णुसूक्ते ) इत्यादिभिर्विष्णुप्रीतये यज्ञः कर्तव्य इति ज्ञायते । एवं च सुकृतकारिणे विष्णुरधिकं श्रेयः प्रत्यर्पयतीति प्रतिपादयतीयं श्रुतिः—विष्णुसूक्तेषु—'इन्द्राय विष्णुः सुकृते सुकृत्तरः ।' इति ।

एतादृशः परमात्मा विष्णुर्विश्वस्य धारक इति 'एको दाधार पृथिवीमुत द्याम्' ( विष्णुसू० ) इति श्रुतिवाक्येन विज्ञायते ।

विष्णोः स्तुतिकर्तारो भक्ताः शाश्वतपदं प्राप्नुवन्तीति 'ध्रुवासोऽस्य कीरयो जनासः' ( अस्य विष्णोः कीरयः=स्तोतारः जनासः=जनाः ध्रुवासः =ध्रुवाः शाश्वताः भवन्तीति शेषः । ) इत्यनेन सूच्यते ।

एवं च महान्तमेनं विष्णुं स्तौति भगवती श्रुतिः–'त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेव या मतिं दाः' = हे विष्णो विश्वकल्याणकारिणीं विपुलां बुद्धिं प्रयच्छ ।

"किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टो अस्मि ।" = हे विष्णो इतः परं किं वक्तव्यम् ? साक्षात् त्वमेव अहमस्मि । ( शिपिविष्टः नाम विष्णुः । ) अर्थात् त्वयि मम वयो भवत्विति ।

"वषट् ते विष्णवास आकृणोमि
तन्मे जुषस्वशिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे
यूयं पात स्वस्तिभिः सदा नः ।।"

= हे विष्णो मम = मया समर्पितं हव्यं सेवस्व । मे = मया (प्रयुक्ताः) स्तुतिपूर्णाः ( = सुष्टुतयः ) गिरः त्वां वर्धन्तु । तव महिमसदृश्यः स्तुतयः सन्तु । अर्थात् पुष्कला एव स्तुतीः करोमि इत्यर्थः । त्वं तु सदा स्वस्तिभिः श्रेयस्कारकैः कर्मभिः अस्मान् रक्ष ।

विष्णोरितरे श्रीनृसिंहादयोऽवताराः पुराणेषु यथा वर्णितास्तथा तत्तदुपनिषत्स्वपि वर्णिताः । यथा श्रीनृसिंहतापनीय–रामतापनीय–श्रीदत्तोपनिषदः । अवतारवर्णनेन सह आसूपनिषत्सु उपासनापद्धतिरेव मुख्यत्वेनोपदिष्टा ।

विष्णोरवतारा बहव एव विद्यन्ते । केषुचित् पुराणेषु दश । श्रीमद्भागवते पुनः चतुर्विंशतिरवतारा वर्णिताः । तत्र श्रीदाशरथिरामस्य श्रीकृष्णस्य च उपासना बहुलप्रचारा ।

लोके या देवताः उपास्यत्वेन प्रथितास्तासां पञ्चसु देवतास्वन्तर्भावो भवति । ताश्च देवता इमाः – १ श्रीगणेशः २ श्रीविष्णुः ३ श्रीशिवः ४ श्रीसूर्यः ५ श्रीदेवी इति । आसां देवतानामुल्लेखः वेदेषु वर्तत एव । तथा हि, तत्तेषां केचिदार्चिका मन्त्राः—

१ गणेशः–'गणानां त्वा गणपतिं हवामहे०'
'निषुसीद गणपते०'
२ विष्णुः–'विष्णोर्नुकं वीर्याणि प्रवोचं यः०'
'विष्णोः कर्माणि पश्यत०'
३ शिवः — 'त्र्यम्बकं यजामहे सुगन्धिं०'

'तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।'

४ सूर्यः—'उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ।'

५ देवी—तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ।।'

एषां पञ्चानां देवतानामुपासनाऽपि वेदोपज्ञा एव । अथर्ववेदे पुनरेषां पञ्चानामुपनिषदः सन्ति । ताश्च गणपत्यथर्वशीर्षोपनिषत्, नारायणाथर्वशीर्षोपनिषत् इत्यादयः । एषां पञ्चानां तत्तदुपनिषत्सु जगदाधारभूतब्रह्मस्वरूपत्वं प्रतिपाद्यते । ब्रह्मस्वरूपत्वादेतेषां पञ्चानामपि परस्परं मूलतः अभेद एव । अत एव विष्णुसूक्तेषु—

'तव श्रिये मरुतो मर्जयन्त रुद्र
यत्ते जनिम चारुचित्रम् ।' इति ।

विष्णुं प्रति रुद्र इति सम्बोधितम् । (विष्णुमुद्दिश्य श्रूयते–हे रुद्र ! तव शोभायै एव मरुतः देवाः, वायवो वा शोधयन्ति, जगत् इति शेषः ।) एवं सूर्यस्वरूपत्वमपि विष्णोः प्रतिपादितम्—

'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।। (ऋक्)

दिवि आकाशे आततं चक्षुः इव(यः सूर्यः,तद्रूपं) विष्णोः श्रेष्ठं पदं विद्वांसः सदा पश्यन्तीत्यर्थः । सूर्यश्च 'सूर्य आत्मा जगतस्तस्थुषश्च' इति स्थावरजङ्गमात्मक सृष्टेर्मूलमिति सौरसूक्तेष्वभिहितम् । एवं च विष्णोर्ब्रह्मस्वरूपत्वेन चतुर्भिरितरदेवताभिस्तादात्म्यमुक्तं भवति ।

एतस्य ब्रह्मरूपविष्णोःसत्स्वरूपविज्ञाने न वेदादन्यत् किमपि प्रमाणमस्ति । तस्माद्वेदानभ्यस्य तद्गतरहस्यविज्ञानाय तदविरोधिस्मृतिपुराणादि शास्त्राण्यधीत्य स्वश्रेयः सम्पादने मनुष्यान् यथावत् प्रेरयतु भगवान् विष्णुरिति शम् ।



त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ।। १ ।।
त्वं मनस्त्वं यमस्त्वं पृथिवी त्वं विश्वं खमथाच्युतः ।
स्वार्थे स्वाभाविकेऽर्थे च बहुधा संस्थितिस्त्वयि ।। २ ।।
विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग् विश्वमायुस्त्वं विश्वक्रीडारतिः प्रभुः ।। ३ ।।
नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय अनादि निधनाय च ।। ४ ।।

मै. आ. ५।१।।



# विष्णु - तत्त्वम्

श्रोत्रिय-ब्रह्मनिष्ठ-श्रीमत्परमहंसपरिव्राजकाचार्य-दार्शनिकसार्वभौम-विद्यावारिधि-न्यायमार्तण्ड-वेदान्तवागीश-
श्री १००८ स्वामिमहेश्वरानन्दमहाराजमहामण्डलेश्वरमहाभागा

**"व्यापकं विश्वाधिष्ठानं विष्णोस्स्वरूपम् ।"**

**'विष्लृ-व्याप्तौ'–'विश-प्रवेशने'** — इत्याभ्यां धातुभ्यां निष्पन्नो भवति विष्णुशब्दः । यदाह निरुक्तेऽपि यास्कः—**'अथ यद्विषितो भवति, तद्विष्णुर्भवति, विष्णुर्विशतेर्वा व्यश्नोतेर्वा'** ( नि. १२।१६ ) इति । विषितः=व्याप्तो यत्=यस्माद् भवति, तत्=तदा विष्णुर्भवति । यदा प्रविष्टो भवति, तदाऽपि विष्णुर्भवति । विपूर्वस्य वाऽश्नोतेरपि विष्णुरूपं सिद्धयति । व्याप्नोत्ययं सर्वं तदा विष्णुः परमात्मा भवति ।

सति चैवं चतुर्षु वेदेषु प्रसिद्धोऽयं मन्त्रो विष्णोः परमात्मनस्तादृशं स्वरूपं स्पष्टतो बोधयति–तद्यथा–**'इदं विष्णुर्विचक्रमे, त्रेधा निदधे पदम् । संमूढमस्य पांसुरे ।।'** ( ऋ. १।२।७।२ ) ( शु. य. ५।१५ ) (सा. सं. उ. आ. ८।२।५।२) (अथर्व सं. ७।२६।४) ।

इदं=यदिदं विविधनामरूपकर्मभिः प्रसिद्धं निखिलं जगद्, विष्णुः=परमात्मा, विचक्रमे=विक्रमते–अधितिष्ठति । छन्दसि कालानियमात् । तस्याधिष्ठानतामेव स्पष्टयितुमाह–त्रेधा=सत्त्वेन, चित्त्वेन, आनन्दत्त्वेन च प्रकारत्रयेण पदं=स्वरूपं, अस्मिञ्जगति, निदधे=निधत्ते=स्थापयति । अत एवास्य तत्सामान्यं समनुगतं स्वरूपं-अस्ति-भाति-प्रियत्वेन सर्वत्र प्रकाशते-अस्ति घटो, भाति पटः, प्रियं पुस्तकमित्येवम् । अस्य विशिष्टं नित्यशुद्धबुद्धमुक्तनिर्विशेषाद्वयस्वरूपन्तु पांसुरे समूढम् पांसुरे=पांसवः–अविद्याख्यो दोषास्सूयन्ते यत्र तस्मिन्नविद्याकल्पिते रागादिक्लेशप्रचुरेऽस्मिन्संसारे समूढं=सम्यग्गूढं=अन्तर्हितं अत एव तन्न दृश्यते मूढैः । अपि वोपमार्थे स्यात् । यथा–पांसुले=पिशुनीयाः पांसवो-रजः कणा भवन्ति, तस्मिन्पांसुव्याप्ते प्रदेशे न्यस्त पदमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यते, एवमस्य विशेषस्वरूपमप्यविद्याद्यावरणव्यवहितत्वान्न दृश्यते सर्वैरिति भाव. । अत एवाह भगवानपि गीतासु—**'नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।।'** ( ७।२५ ) इति । तदेव हि–अधिष्ठानस्वरूपं भवति, यत्सामान्यत. प्रकाशमानमपि विशेषतो न प्रकाशते । यथा–सर्पोऽयमिति भ्रमकाले इदन्त्वेन प्रकाशमानमपि रज्जुस्वरूपं रज्जुत्वेन विशेषतो न प्रकाशते, तथा प्रकृतेऽपि विज्ञेयम् । सर्वथाऽप्रकाशिते विशेषतश्च प्रकाशितेऽधिष्ठानवस्तुनि कस्याप्यध्यारोपस्यासंभवात् । अनेन सर्वव्यापी सर्वभूतान्तरात्मा विश्वाधिष्ठान परमात्मा विष्णुरिति सिद्धयति ।

यद्यप्याधिदैविकव्याख्याने विष्णुपदेन प्रसिद्ध आदित्यः प्रतिपादितो निरुक्तादौ, तथाप्याध्यात्मिकव्याख्याने वेवेष्टि-व्याप्नोति सर्वं जगदन्तर्बहिरिति व्युत्पत्त्या विष्णुर्विश्वाधिष्ठानः परमात्मैव सिद्धयति ।

**'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ।'** ( शु. य. ३१।५ ) इति श्रुतेः । अस्य नामरूपक्रियात्मकस्य सर्वस्य जगतोऽन्तर्बहिर्व्याप्तिः—विश्वाधिष्ठानभूतस्य परमात्मन एव सिद्धयति, **'आभरणेषु सुवर्णस्येव'** नान्यस्येति बोध्यम् ।

## स्वात्मनिवेदनभक्तिस्ततो विष्णुपरमपदलाभश्च

यः कश्चित्पुण्यकर्मा भगवदेकनिष्ठया निरतिशयप्रीतिरूपया भक्त्याऽखिललोकशरण्यं जगद्गुरुं विश्वेश्वरं प्रपद्यते । तस्य महतो विष्णोर्निगमागममुनिवृन्दगेयं गुणनामादिकमजस्रं संकीर्तयति । तस्मै निवेदयति च सर्वतोभावेन सहात्मना सर्वस्वम् । स

खलु भवबन्धनाद्विमुक्तस्सन्सकललोकगीयमानामतुलां कीर्तिं समवाप्य पुनरावृत्तिवर्जितं तद्विष्णोः परम पदं समुपैतीत्यतो मोक्षसाधनगणनासु गरीयस्यामात्मनिवेदनभक्तौ समेषां लोकानां महती रुचि जनयितु तत्प्राशस्त्यं फलनिरूपणेन वर्णयति भगवानतिधन्यो वेद —

**ॐ यः पूर्व्याय वेधसे नवीयसे,**
**सुमज्जानये विष्णवे ददाशति ।**
**यो जातमस्य महतो महिब्रवत्**
**सेदु श्रवोभिर्युज्यं चिदभ्यसत् ।।**

(ऋ म.१ सू.१५६ ऋ.२)　(तै. ब्रा २।४।३।९)

यः = कश्चिन्मर्त्यस्सुकृती, पूर्व्याय = जगतः पूर्वमेव भवाय-पूर्वकालीनाय-नित्याय-परमकारणाय पुनः कथंभूताय ? वेधसे=विविधजगत्कर्त्रे विविधप्राणिकृतकर्मफलव्यवस्थापयित्रे वा । नवीयसे = नित्यनूतनाय-अत्यन्तरमणीयाय-शाश्वतस्वरूपायेति यावत्स्तुत्याय वा । पुन. कीदृशाय ? सुमज्जानये = स्वयमेवोत्पन्नाय स्वयंभवे, **'अजायमानो बहुधा विजायते ।'** (शु. य ३१।१९)इति न्यायेन-अभिनव जलधरश्यामलमरविन्ददललोचनमनवरतप्रसादसुमुखमखिलजनविलोचनाह्लादकमनङ्गकोटिसुभगमाश्रितवात्सल्यवरुणालय रामकृष्णादिविविधविग्रहं धृत्वा स्वयमेवात्ममायया प्रकटीभवित्रे-इति यावत् । 'सुमत् = स्वयमित्यर्थे' इति यास्क., जेनरौणादिके इणि कृते । 'जानि' इति रूप सिद्ध्यति । यद्वा-सुतरां मादयतीति सुमत्, तादृशी-सुष्ठु स्वयं माद्यन्ती-मादयन्ती चान्यान्सा महालक्ष्मी जाया यस्य सः, तथोक्तस्सुमज्जानिस्तस्मै-सर्वजगदुन्मादनशीलायाश्श्रियः पतये नारायणायेत्यर्थः । 'बहुव्रीहौ जायायाः निङि' ति निङादेशस्समासान्तः, पूर्वोक्तविशेषणविशिष्टाय विष्णवे=व्यापनशीलाय भगवते, ददाशति = सहात्मना सर्वस्वं, ददाति-निवेदयति-समर्पयतीत्यर्थः । निरन्तरभगवदेकश्रवणकीर्तनयजनादिकं कुर्वन्भगवदेकार्पितजीवितस्सन्क्षणमात्रमपि परमप्रियसुहृत्तमं भगवन्तमविस्मरन् विषयाकारवृत्तिशून्येन चेतसा तमेवाभेदभावनयाऽनवरतं ध्यायमानस्तदेकपरो भक्त आत्मनिवेदक इत्युच्यते । किञ्च य., अस्य = विष्णो., महतः = महानुभावस्य विभोर्व्यापकस्य निर्गुणस्य निराकारस्य यत् महि = महद् दिव्य पूज्य, जात = रामकृष्णशिवहिरण्यगर्भादिरूपेण प्रकटीभूत भजनीय सगुण साकार स्वरूपं, ब्रवत् – ब्रूयात्, तदीयकल्याणगुणगणानुसन्धानेन तद्दिव्यनामभिश्च तमेव भगवन्त सकीर्ययेत्, ब्रवीतेर्लेटचडागमे सति ब्रवदिति रूप निष्पद्यते । सेदु = उशब्दोऽपि शब्दार्थः, इत् = एवकारार्थो भिन्नक्रमः, सोऽपि आत्मनिवेदको ज्ञानवान्संकीर्तयिता भक्तः, एव = निश्चयेन, श्रवोभिः = श्रवणीयैः दिगन्तविख्यातसद्यश्शोभिर्युक्तस्सन्, युज्यंचित्= ज्ञानिभिर्भक्तैर्गन्तव्यमेव तत्पद कैवल्यं धाम, अभि = आभिमुख्येन सुतरां असत् = गच्छति प्राप्नोतीत्यर्थः ।

## विष्णुनामस्मरणभक्त्या तत्सुमतिलाभः

अप्रतिम किल भगवतो दिव्यगुणकर्मनामादिसकीर्तनस्य महिमा । तत्खलु सृजति पराः श्रेयः परम्पराः । सकीर्तयितारस्सर्वसन्तापविनिर्मुक्तास्सन्तः किमप्यात्यन्तिकमनिर्वाच्यं सुखमनुभवन्ति । रहस्यार्थानुसन्धानपुरस्सरेण सच्छ्रद्धयाऽनुष्ठितेन तेनाविच्छिन्नतैलधारावद्भगवदेकाकारास्समाधिरूपाश्चेतो वृत्तयस्सम्भवन्तीत्यनुष्ठातॄणां प्रत्यक्षमेतत् ।

अत एव यूयं संकीर्तनयोगेन यौष्माकीणं सर्वमपि जीवनं पावनं सफलञ्च कुरुध्वमिति तदनुष्ठानाय प्रतिज्ञा कारयन्नादिशति भगवान्वेद.—

**ॐ तमु स्तोतारः पूर्व्यं यथाविद.,**
**ऋतस्य गर्भं जनुषा पिपर्तन ।**
**आस्य जानन्तो नाम चिद्विवक्तन,**
**महस्ते विष्णो ! सुमतिं भजामहे ।।**

( ऋ.म.१ सू.१५६ ऋक् ३, तै ब्रा.२।४।३।९ )

हे स्तोतारः = हे संकीर्तयितारः ! तमु = त-

मेव–सर्वकारणत्वेन प्रसिद्धं प्रणतवत्सलं कृपासुधाब्धि सकललोकगुरुं भक्ताभिवाञ्छितकल्याणसमर्पणकल्पद्रुमं विश्वाधिनाथं भगवन्तं श्रीमन्नारायणं विष्णु, कीदृशं ? पूर्व्य = पूर्वार्हि–अनादिससिद्धं-सनातन-पुराणपुरुषमिति यावत् । पुन कथम्भूत ? ऋतस्य = यज्ञस्य गर्भ = सारभूत, यज्ञानुष्ठानेनाभिवाञ्छनीयफलभूतमिति यावत् । यद्वा–यज्ञस्य मध्ये गर्भवत्तदधिष्ठातृत्वेन वर्तमानमित्यर्थः । यद्वा–ऋतस्य–यज्ञस्य गर्भभूतं यज्ञात्मनोत्पन्नमित्यर्थ । **"यज्ञो वै विष्णुः ।"** (शत. ब्रा. १।१।२।१३) इति श्रुतेः । अथवा ऋतस्य = उदकस्य गर्भ = गर्भभूत कारणं उदकमुपलक्षणमन्येषां भूतानां, **'अप एव ससर्जादाविति ।"** (मनु. १।८) स्मृत्या तस्य प्राधान्यावगमात्तन्निर्देशः, कारण हि कार्यस्य गर्भभूतं समन्वयात्कारणसमन्वितानि कार्याणि लोकेऽपि दृश्यन्ते, अत एव तस्य गर्भत्वेन निर्देशोऽत्र विज्ञेयः । यद्वा–ऋतस्य = उदकस्य क्षीरसमुद्रस्य मध्ये गर्भं = गर्भवन्निवसनशीलमिन्दिराहृदयवल्लभं नारायणमिति यावत् । तदुक्तं–राजर्षिणा मनुना = **आपो नारा इति प्रोक्ता, आपो वै नरसूनवः । ता यदस्यायनं प्रोक्तं तेन नारायणस्स्मृतः ।।'** (१।१०) इति । अथवा ऋतस्य = पारमार्थिकस्य–त्रिकालाबाध्यस्य सत्यस्य, गर्भं = अन्तस्सारभूतं–अधिष्ठानतत्त्वं, अत्र पुरुषस्य चैतन्यमि' तिवद् भेदार्थबोधिका औपचारिका षष्ठी ज्ञेया । एवम्भूतं विष्णु यथा = येन गुरूपसदनश्रद्धातत्परत्वादिना प्रकारेण यूयं विद= = जानीथ; तथा तं साक्षात्कृत्य जनुषा पिपर्तन= जन्म समाप्तिं कुरुत इत्यर्थः । प्रत्यगात्मनो विष्णोस्साक्षात्कारेण पुनर्जन्मसमाप्तिलक्षणो मोक्षो लभ्यत इति भावः । यदाह—श्रीमद्भागवते वेदपुरुषस्सनातनो भगवान्—

**मामात्मानं स्वयं ज्योतिः, सर्वभूतगुहाशयम् ।**
**आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ।।**
(भा. ३।२४।३९) इति ।

यद्वा – यथाविदः = यथार्थतत्त्ववेत्तारस्सन्तो भवन्तः, जनुषा = विष्णुमयेन शान्तिप्रसन्नतोपेतेन जीवनेन, पिपर्तन = सर्वात्मानं विष्णुमानन्दनिधिं स्वस्वरूपं यूयं प्रीणयत–परमेण प्रेम्णा सततमनुभवत इत्यर्थः । अथवा यथाविद = यावद् विष्णुतत्त्वस्य यथावद्विज्ञानवन्तो यूयं न भवत, तावत्–तत्स्मरणसकीर्तनादिमयेन जीवनेन विष्णुं पिपर्तन = प्रसादयत, यतो विष्णुप्रसादादेव तत्तत्त्वस्याधिगमसम्भवादिति भाव. । विदेर्लटि मध्यमपुरुषस्य प्रथमा विभक्तेर्वा बहुवचनं, विदऋतस्येत्यत्र संहितायां **'ऋत्यक'** इति प्रकृतिभावः । किञ्चास्य = महानुभावस्य व्यापकस्य विष्णोः, नामचित् = सर्वैर्मननीयं पावनमभिधानं सार्वात्म्यप्रतिपादकं **'शिवविष्णुहरी'** त्यादिकन्नाम जानन्त = सेवितं सत्तत्सकलपुरुषार्थप्रदमित्यधिगच्छन्तस्सन्तो यूयं आ = समन्तात्-सर्वतोभावेन, विवक्तन = विशेषेण ब्रूत–परया श्रद्धया तन्मयता युक्तया वदत–निरन्तरं जपत–संकीर्तयत इत्यर्थः । यद्वा–विष्णोरेव नाम=स्वर्गादिसाधनभूतयज्ञाङ्गमन्त्रद्रव्यदेवतेष्टयाद्यात्मना परिणामं, वर्णलोपागमादेर्निरुक्तलक्षणत्वात्–एकदेशस्यापि समुदायबोधकन्यायाच्चात्र नामेन परिणाम बोधनं प्रत्येतव्यम् । आजानन्तो यूयं सर्वमयं विभुं विष्णुं विवक्तन = ब्रूत शिष्येभ्यस्समुपदिशत इति यावत् । तदुक्तं गोविन्देन गीतासु—

**अहं क्रतुरहं यज्ञस्स्वधाऽहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ।।**
(९।१६) इति ।

भागवते भगवता व्यासेनापि—

**त्वं क्रतुस्त्वं हविस्त्वं हुताशस्स्वयं**
**त्वं हि मन्त्रस्समिद्दर्भपात्राणि च ।**
**त्वं सदस्यर्त्विजो दम्पती देवता**
**अग्निहोत्रं स्वधा सोम आज्यं पशुः ।।**
(४।७।४५) इति ।

यत. पृथग्दृष्टिरज्ञो विष्णुतत्त्वतो विमुखस्सन् विषीदति, अनन्यदृष्टिर्विज्ञस्तत्तत्त्वाभिमुखस्सन् सम्प्रसीदतीति भाव. । ( वचेर्लोटि छान्दसश्शपः श्लुः बहुल छन्दसीत्यभ्यासस्येत्वं पूर्ववत्तनादेशः ) । तदेव सर्वात्मनो विष्णोस्सकीर्तनादिकमुपदिष्टम् । इदानी तत्साक्षात्काराय भक्ता यजमानास्तदखण्डाकाराश्चित्तवृत्तीर्विधातु प्रतिजानते—हे विष्णो ! हे सर्वात्मदेव! महः=महतो विभो , ते=तव सुमति= त्वदेकाकारां सुष्ठु–शोभना बुद्धि आ = समन्तात् भजामहे = सेवामहे सम्पादयामो वा, वय त्वामेवैक यजनशीलाः ।

**अयं भावः**—स्मरणकीर्तनादिनेदमेव कर्तव्यं विद्यते, यत्सर्वतोभावेन विषयान्तरानाक्षिप्तेन मनसा मुहुर्मुहुर्विष्णुचिन्तां विधाय मनसस्तदेकतानत्वसम्पादनम् । इदमेव तत्त्वसाक्षात्कारप्रयोजक निदिध्यासन विद्वद्भि परिगीयत इति । यद्वा–तत्साक्षाद्दर्शन तदच्छानुग्रहदृष्टिमन्तरेण कथमपि न सिद्ध्यतीत्यतस्तामेव याचन्त इत्याह-ते विष्णोस्सुमति = त्वदीयामच्छानुग्रहबुद्धि–कृपादृष्टि भजामहे सेवामहे अवलम्बामहे, याचामहे वा निरन्तरमिति ।

## अन्यानि-वेदर्चांमि

एवं '**त्वं विष्णुरुरुगायो नमस्यः**' (ऋ.२।१।३) '**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्** ।।' ( ऋ. १ २२।२०, शु य. ६।५ ) '**नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः** ।।' (ऋ.१। १५५।५) '**विष्णोः कर्माणि पश्यत** ।' (ऋ १।२२। २९, सा स १८।२।३) '**प्र तद्विष्णुस्स्तवते वीर्येण यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा** ।' (ऋ. १।१५४।२, शु. य. ५।२८) '**विष्णुस्सर्वा देवताः** ।' (ऐ. ब्रा २।१।१) इत्येवमादिप्रशस्तवेदमन्त्राणामालोचनेनाध्यात्मिकार्थव्याख्याने विष्णुतत्त्व सर्वात्मभूत व्यापकमेकमद्वयं सच्चिदानन्दपरब्रह्मात्मकमेव सिद्ध्यति । अयमर्थ.–ऊरुगाय. = ऊरुभिः–बहुभिर्विद्वद्भिर्गीयमानमहिमा । इव = यथा, दिवि = निर्मलाकाशे आततं = रश्मिभिर्व्याप्तं चक्षु = सूर्य सर्वे पश्यन्ति । तथा विष्णोः परम पदं, सूरयः = तत्त्वदर्शिनो ज्ञानिनस्सदाऽपरोक्षतया पश्यन्ति–अनुभवन्ति–साक्षात्कुर्वन्तीति यावत् । नरः = महापुरुषाः, यत्र = यस्मिन्विष्णुपरमपदे, देवयवः = विष्णुदेवभावमात्मन इच्छन्तः । मदन्ति = निरङ्कुशां तृप्तिमनुभवन्ति । उरुक्रमस्य= अत्यधिकं सर्वं जगदाक्रममाणस्य–विश्वाधिष्ठानस्य । मध्वः=मधुरस्य–शाश्वतानन्दस्य, उत्स =निष्यन्द.– अखण्डप्रवाहो वर्तते । इत्था = इत्थं, स खलु सर्वेषां मुमुक्षूणां बन्धुः = परमहितकरोऽस्ति । कर्माणि= विश्वसर्जनरक्षणसंहारलक्षणानि । तत् = सः प्रसिद्धो विष्णुः–सर्वात्मा भगवान्, वीर्येण = स्वमहिम्ना, प्रस्तवते = प्रस्तूयते महर्षिभिः । यस्य ऊरुषु = व्यापकेषु त्रिषु विक्रमणेषु = सत्ताचैतन्यप्रियतालक्षणेषु– अधिष्ठानभूतेषु सर्वाणि भूतानि पृथिव्यादीनि भौतिकानि विविधशरीराणि च अधि = अधिष्ठाय क्षियन्ति=निवसन्तीत्यर्थः । (क्षि–निवासे) इति सर्वमनाविलम् ।



# विष्णुः परमः

श्री पं. साम्बदीक्षितदामोदर–उपाध्यायः, गोकर्ण,

यस्याद्यनिकाय्यं परमं पदमाहुः ।
तं संप्रति वंदे विष्णुं शिपिविष्टम् ।।

श्रीभगवान् विष्णुः अतोदेवा इत्यादिभिः षड्भिः ऋग्भिः एवं स्तुतः महर्षिणा मेधातिथिना । वयं तत्र श्रेष्ठानि पदानि विमृशामः । तत्र द्वितीयेनानेन मन्त्रेण विष्णुं सूर्यरूपं स्तौति, तदित्थं—इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं । समूढं अस्य पांसुरे ।। निर्वचनमाह यास्कः—यदिदं किं च तद्विक्रतमे विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवि इति शाकपूणिः, समारोहणे= उदयगिरौ-विष्णुपदे = अंतरिक्षे, गयशिरसि= अस्तगिरौ इत्यौर्णवाभः, इति । विष्णुः = अथ यद्विषितो भवति तद्विष्णुर्भवति विष्णुर्विशतेर्वा व्यश्नोतेर्वा । समूढं, गूढं, अस्य पांसुरे, अंतरिक्षे पदं न दृश्यते । तदुक्तं—स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनं, इति । गोपाः = वाक्पालकः (सर्वजगतः पालकः) अदाभ्यः ( केनापिहिंसितुमशक्यः ) एष धर्मपालक इत्युक्तं एकस्मिन् पदे "अतो धर्माणि धारयन्" इदमेवानुसृत्य गीतायां भगवदुक्ति—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।

विष्णुर्व्रतपालकः "यतो व्रतानि पस्पशे ।" 'इन्द्रस्य युज्यः सखा' इन्द्रेण सहैव विष्णोर्वासः इति मेधातिथिदर्शनं । इमौ इन्द्राविष्णू भरद्वाजः स्वकीये दर्शनेऽष्टाभिस्तुतवान् । तस्य अन्तिमो मन्त्रः—

उभाजिग्यथुर्न पराजयेथे
न पराजिग्ये कतरश्च नैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां
त्रेधा सहस्त्रं वितदैरयेथां ।।ऋक्।।

इन्द्रविष्णू उभौ मिलित्वा शत्रूनजैष्टं । कदाचन एकतरोऽपि न पराजैष्ट । युवां असुरैः सहास्पृधेथां तत् सहस्रधनं असुरैराहृतं (लोका वेदाश्च) त्रिधा व्यैरयेथामित्यर्थ. । एवं स्थितं परमं विष्णुपदं बुद्धिमन्तः जागरूका एव प्राप्नुवन्ति नान्ये ।

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।। (ऋ. मं.)
तद्विप्रासो विपन्यवो जागृवांसः समिंधते ।
विष्णोर्यत्परमं पदं ।। (ऋ. मं.)

द्वितीयं दीर्घतमसो दर्शनं ।। दीर्घतमा औचथ्यः विष्णोर्नुकमित्यादिसूक्तत्रयेण स्तौति व्यापकमेनं । 'विष्णोर्नुकं वीर्याणि प्रवोचम्,' विष्णोर्माहात्म्यं वच्मि, इति 'यः पार्थिवानि रजांसि विममे ।' रंजनात्मकानि पृथिव्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि निर्ममे । 'यो अस्कभायदुत्तरं सधस्थं ।' अतिविस्तीर्णं लोकत्रयाश्रयभूतं अन्तरिक्षं यः निर्मितवान् । 'विचक्रमाणस्त्रेधोरुगायः ।' बहुस्तुत्यः सः त्रिप्रकारेण स्वसृष्टान्लोकान्क्रममाण इति । मन्त्रमिमं व्याख्यायता ऐतरेयेण स्वीये ब्राह्मणे (अ. १३, खं १४) 'विष्णोर्नुकं वीर्याणि प्रवोचमिति वैष्णवीं शंसति यथा वै मत्यमेवं यज्ञस्य विष्णुस्तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं कुर्वन्नियादेवमेवैतद्यज्ञस्य दुष्टुत दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति यदेतां होता शसति ।। इति ।।

अतएवोक्तं सर्वकर्मणामंते कर्मप्रपूरणाय विष्णुस्मरणं कर्तव्यं, प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषुयत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ।।

मृगो न भीमः = सिंहादिरिव भयंकरः (तै.

आ. ७।७।१०) भीषास्माद्वातः पवते भीषोदेति सूर्यः इत्यादि। कुचरः = सर्वासु भूमिषु संचारी। गिरिष्ठाः = उन्नत (उत्कृष्ट) प्रदेशवासी। तदेव परमं पदमित्युक्तिः। सर्वं भुवनमस्य महत्सु त्रिषु विक्रमणेषु वर्तते। 'यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा' (ऋ मं) गिरिक्षित= वाच्यधिष्ठितःवृषा=कामानां वर्षिता। अद्वितीयः सन् सकलभुवनं धृतवान् "एको दाधार भुवनानि विश्वा महान्–शूरः, बन्धुः = अस्य स्थानस्य वर्णनमाह= तदस्य प्रिय मभि पाथो अश्यां नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था विष्णो. पदे परमे मध्व उत्सः ॥ (ऋ मं.)।

अस्य स्थाने देवान् कामयमानाः हर्ष लभंते। अस्य विष्णोः परमे पदे अमृतस्य स्यंदनं वर्तते॥ एवं स्वस्थाने आगतेभ्य एष अमृतं पाययिष्यति। अतः एषाबन्धुः॥

पिता=दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः। (ऋ म.) पितुः, स्वोत्पादकात् स्वयं उत्पन्नं सत् अवरं, निकृष्टं नाम पौत्रसंज्ञं पर, तदुत्कृष्टं पुत्र इतिनाम तदुभयापेक्षया तृतीयं, पितेति नाम धारयति। इनः=परमेश्वरः त्राता=रक्षकः, अवृकः = अहिंसकः। तृतीयं अस्य स्थानं द्युलोकाख्यं द्रष्टुं परं ज्ञानिन एव समर्था नान्ये तिर्यगादयः॥ "तृतीयमस्य न किरादधर्षति वयश्चन पतयंतः पतत्रिणः। सर्वेषां अविषयत्वादिति फलितार्थः।

एष चतुर्नवतिसंख्याकान् कालावयवान् कल्पयति। संवत्सरएकः, अयने द्वे, पञ्चर्तवः, द्वादशमासाः, चतुर्विंशत्यर्धमासाः, त्रिंशदहोरात्राः, अष्टौयामाः, मेषादिद्वादशलग्नानि मिलित्वा ९४ कालावयवाः। "चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्। बृहच्छरीरः= विराट्पुरुषः अतएव सहस्रशीर्षा पुरुष इत्यादिना विष्णुरेव स्तूयते।

विमिमानः=देवतिर्यगात्मना स्वं विभागकः अतएव क्रमादस्य प्रथमं हस्तपादादिहीनत्वं मीनत्वं ततः कूर्मत्वं ततो वराहत्वं ततः अर्धमनुष्यत्वं, अर्धमृगत्वं नृसिंहत्वं। ततो बाल्यत्वं वामनत्वं। ततः केवलपुरुषत्व भार्गवरामत्व। ततः स्त्रीयोगः सीतारामत्वं। ततः संपूर्णप्रपंचभोगत्वं श्रीकृष्णत्वं। ततो निर्वाणत्वं बुद्धत्वं, इमं पुराणोक्तं, परम्परया पाकेन अवतारा अनुभूताः (धाता यथापूर्वमकल्पयत्, इत्युक्तत्वात्। (नैतन्मन्त्रे विद्यते- सम्पादकः)।

युवा=युवकः। अकुमारः–अनल्पः, मित्रः= मितेर्दुःखात् त्राता (प्रमीतेस्त्रायते इति निरुक्तं) शेव्यः=सुखे साधुः, सुखकर्ता, घृतासुतिः=यज्ञात्मना वर्षकः (यज्ञाद्भवति पर्जन्यः, भ. गी.) विभूतद्युम्नः = प्रभूतयशाः अन्नो वा, एवयाः = रक्षणस्य मिश्रयिता। सप्रथाः = सर्वतो विस्तारकः। अर्ध्यः = पुनः पुनः प्रवर्धनार्हः। यज्ञः = यज्ञ रूपी (यज्ञो वै विष्णुः, श. ब्रा. १।१।२।१३) 'यज्ञेन यज्ञमयजन्त देवाः, इति ज्ञापकं, राध्यः = समाराधनीयः, पूर्व्यः = पूर्वकालीनो नित्यः पुराणपुरुष इत्यर्थः। वेधाः= विविधजगत्कर्ता, नवीयः = नूतनत्वादत्यंतरमणीयः। सुमज्जानिः = स्वयमेवोत्पन्नः यद्वा, सुतरां मादयतीति सुमान् सुमती जाया यस्य सः सुमज्जानिः। अस्य हिरण्यगर्भादिरूपजन्मादिकथनस्य अभ्यसनेन कथनेन च अन्नं कीर्तिश्च लभ्यते। "यो जातमस्य महतो महि ब्रवत् सेदुश्रवोभिर्युज्यं चिदभ्यसत्॥ (ऋ. मं) एषु नामसु नामजपे

विष्णुनामकनामेव गरीय इत्याह । "तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषापिपर्तन । आस्य जानंतो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे, (ऋ. मं.) । हे भजकाः तमेव विष्णुं अनादिसंसिद्धं यज्ञात्मान ( अबात्मान ) अप एव ससर्जादौ, (मनु. १।७) अस्य विष्णोः सार्वात्म्य प्रतिपादकं विष्णुरित्येतन्नामएव पुरुषार्थप्रदमित्यवगम्य कीर्तयत । तथा च हे देव विष्णो सर्वात्मन् तव शोभनात्मिकां बुद्धिं आश्रयामहे। इति प्रार्थयत, एवं दीर्घतमस आदेशः ।।

एवमेव किंचित्पुरतो गत्वा वसिष्ठमहर्षिः परोमात्रयेत्यादिभिः चतुर्दश ऋग्भिः तव महिमानं कथयितुमहं न समर्थः केनापि तव महिम्नः पारं नादर्शि इति स्तुतवान् । "न ते विष्णो जायमानो न जातो देव महिम्न परमन्तमाप ।" ( ऋ. म. ) तथा च इन्द्राविष्णू युवां सूर्यं उषसं अग्निं च असुरैरावृतं पुनर्जनयंतौ संतौ नेतारौ वृषशिप्रनाम्नो दासस्य मायाः युद्धेषु जघ्नथुः । एवमेव युवां शंबरस्य नवनवति पुरः तथा वर्चिनः असुरस्य सहस्रं शतं च (अनेके इत्यर्थः)शतमनेक भवति शतमनन्तं भवति (निरुक्ते) वीरान् अहिंसिष्टम् । उरुं यज्ञाय चक्रथुरुलोकं जनयंता सूर्यमुषासमग्निं । दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ।। इन्द्राविष्णू दृंहिताः शंबरस्य नव पुरो नवतिं च श्नथिष्टं । शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ।। (ऋ. मं)

एवयावः=एवाः प्राप्तव्यान् कामान् यावयति स्तोत न इति सतः । अर्यः=ईश्वरः । विद्वान् अस्य रजसः पराके क्षयतं=लोकस्यास्य दूरे निवसंतं ।

शिपिविष्टः=परा खलु विष्णुः स्वभक्तस्य वसिष्ठस्य साहाय्यार्थं स्वं रूपं विहायापर शिपिविष्टनामकं कृत्रिमं रूपं धृतवान्, तज्ज्ञात्वा ऋषिराह। किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टो अस्मि । मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ । (ऋ मं) हे विष्णो मास्तु भवतः कृत्रिमं कुत्सितं रूपं । भवान् यं कं च रूप दधातु किंतु तव प्रभावविशेषेण जानन्त्येव शत्रवः अयमेव विष्णुः इति । तदन्नं प्रयासेनेति । तदाह निरुक्ते यास्क -शिपिविष्टो विष्णुरिति द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवति इत्यौपमन्यवः, किं ते विष्णोऽप्रख्यातमेतद्भवति अप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्न रश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यंते तैराविष्टो भवंति 'मावर्पो अस्मदपगूह एतत्' वर्प इति रूपनाम वृणोतीति सतः यदन्यरूपः समिथे सग्रामे भवसि संयतरश्मिरिति । शिपिविष्ट इत्यत्र अन्यत्र 'यज्ञो वै विष्णुः पशवः शिपिः, इति श्रुतेः । ब्रह्माद्यास्थावरांताश्च पशव परिकीर्तिताः तैराविष्टः इति । स्कंदपुराणेपि–शैत्याच्छ्यनयोगाद्वा शीति वारि प्रचक्षते । तत्पानाद्रक्षणाद्वापि शिपयो रश्मयो मताः । तेषु प्रविष्टः सविता शिपिविष्टस्तदोच्यते ।

अंते वसिष्ठप्रार्थना–हे विष्णो तव यजनं भजनं च करिष्ये । तव सुष्टुतयो मम गिरां वृद्धिं कुर्वंतु । त्वं कल्याणैर्नः रक्ष इति ।

वषट् ते विष्णवास आकृणोमि,
तन्मे जुषस्व शिपिविष्ट हव्यं ।
वर्धंतु त्वा सुष्टुतयः गिरो मे,
यूयं पात स्वस्तिभिः सदा नः ।। (ऋ.मं.)

अग्निर्देवानामाद्यः पृथिव्यधिष्ठानत्वात् विष्णुरन्त्यः स्वर्लोकाधिष्ठानत्वात्। अग्निद्वारेणैव सर्वासां देवतानां यजनं संभवति। अन्ते आराध्यः फलप्रदाता च विष्णुः, एतयोर्यजनेन मध्यलोकाधिष्ठितानां सर्वेषां यजनं भवत्येव। तदुक्तं आश्वलायन श्रौतसूत्रे, 'अग्निर्मुखं प्रथमो देवतानां संगतानामुत्तमो विष्णुरासीत्। एवमेव ऐतरेयब्राह्मणे "तदंतरेण सर्वा अन्या देवताः, अग्निः सर्वा देवता विष्णुः सर्वा देवताः", इति। एवं विष्णोः सर्वव्यापकतां सर्वदेवेषु श्रैष्ठ्यं च जानता भगवता ऐतरेयेण स्वकीयब्राह्मणग्रन्थस्य मंगलरूपेणैवोक्तं 'अग्निर्वै देवानामवमो विष्णु. परम इति शिवम्'।

✶

ब्राह्मणे केवले लक्ष्मी नैवसत्यतिमार्दवात्
अत्यौग्र्याद् बिभ्यती क्षत्रे केवले नेच्छति स्थितिम्।
ब्रह्मक्षत्रे तु संपृक्ते ह्यग्नीषोममयात्मनि
निवसत्यतिसंप्रीता ग्रीष्मे शीत इव ह्रदे।
द्वे हि ते बिभ्रतो लोकस्थितिं संभूय तेजसी
तयोर्हि सकला शक्तिः स्थिता विष्णोः क्रियात्मिका ॥ अ. बुध्न्य. संहिता

× × ×

दृश्यताम् —— श्रीकृष्णचन्द्रस्येतिवृत्तं महाभारतेऽत्युत्तमं वर्तते तस्य गुणकर्मस्वभावाश्चरित्रञ्चाप्तपुरुषोपमं वर्तते। यस्मिन् किमप्यधर्माचरणमाजन्मनो मरणपर्यन्तं किमपि वा दुष्कृतं कृतं स्यात् कृष्णचन्द्रेणेति नावर्णि। अयं भागवतप्रणेता च कृष्णचन्द्रमनुचितदोषैर्यथाभिलषितं कलङ्कितवान्। पयोदधिनवनीतादिचौरिकायास्तस्मिन्नारोपणं तस्य कुब्जादासीसमागमः पररमणीभी रासमण्डलेऽमुष्य नृत्यलीलादयश्च दोषाः श्रीकृष्णे समारोपिताः सन्ति तेन। एतत् पठित्वा पाठयित्वा श्रुत्वा श्रावयित्वा चान्यमतवादिनः श्रीकृष्णं निन्दतितराम्। भागवतं नाभविष्यच्चेत् कृष्णचन्द्र सन्निभमहात्मनो मिथ्या निन्दा किमिति समभविष्यत्? —सत्यार्थप्रकाशः

(अनुवादकः – श्री पं. शङ्करदेवः
काव्यतीर्थः।)



# वैष्णवमते भक्तिः

श्री पं० भगवद्दत्तो वेदालंकारः

वैष्णवमतेऽतीव महत्त्वशालिनी भक्तिः। वैष्णवमतस्येयं तु सर्वस्वमिति मन्तव्यम्। भक्तिपरोऽयं विषयोऽध्यात्मक्षेत्रे वैशिष्ट्यमावहति। भक्तिप्रवणैः प्राचीनाचार्यैरस्मिन् विषये बहुशोभनं लिखितम्। भगवद्गीतापुराणादिष्वपि महत्त्वमस्याः दृग्गोचरीभवति। वयमत्र भक्तिस्वरूपनिर्धारणे तदङ्गानां विवेचने च न भृशं प्रयत्नापेक्षाः परं तथापि किंचिदत्र वितन्यते।

वैष्णवमते विष्णुरेव परमप्रभुरित्यत्र नास्ति कस्यापि विप्रतिपत्तिः। परं प्रश्नोऽयं भक्तानां मानसाम्बुधौ पौनः पुन्येन संशयजालमातनुते यदय विष्णुः श्रुत्युक्तदेवतास्वेकतमः प्रधानदेवतानां पङ्क्तिषु लब्धस्थितिको भवितुमर्हति वा न वा? यतोहि वेदेषु प्रतिपादितानामिन्द्राग्निसोमप्रभृतिप्रमुखदेवतानां मन्त्रदृष्ट्या तु विष्णुर्न प्रतीयते प्रथमपङ्क्तिपदभाक्। अग्न्यादिदेवतापेक्षया तस्य मन्त्राणामत्यल्पत्वात्। परमस्मन्मते तु वैदिकदेवतानां गौणमुख्यभावनिर्धारणे नास्त्ययं सत्यः पन्थाः शुद्धश्च निकषः। तत्रास्त्ययं हेतुर्यत् सर्गस्थितिप्रलयहेतुभूतस्य नित्यशुद्धबुद्धमुक्तस्वरूपस्य परब्रह्मणो वर्णनपराः मन्त्रा अङ्गुलिगणनीया एव विद्यन्ते। अग्न्यादिदेवतानाञ्चापेक्षया तु भृशमल्पीयांसस्तदनेनाल्पवर्णनेन परब्रह्मणः परमोच्चस्थानाद् भ्रंशः सम्भवति किम्? स्वे स्वे सद्मनि 'विश्वे सतो महान्त इदिति श्रुतिवचनं जोघुष्यते पारम्यवादिभिः पारदृश्वभिः। तं हि स्वक्षेत्रभाजं देवमन्ये देवा अधस्तादुपासते। यथा राजसूये राजन्यं ब्रह्मशक्तिसम्पन्नोऽपि विप्रोऽधस्तादुपास्ते शातपथीयं[1] सूक्तिर्वेदरहस्यानवगुण्ठनाय संलग्नैः सर्वैर्विद्वद्भिरवलोकनीया। अतः किमायातम्—यत् स्वे स्वे क्षेत्रे सर्वे राजानोऽन्ये च तत् प्रकृतिभूता इति दिक्।

अधुना प्रकृतमनुसरामः, विचारणीयोऽयं प्रश्नो यद् वैष्णवमते भक्तेर्यत् स्वरूपं प्रतिपादितं किं तद् वेदादुद्गतमुतपश्चात्तत्र समाविष्टम्। प्रायः केचनाधुनिकाः वेदोक्तपरिभाषान्तर्गतरहस्योपोद्बलने चोन्मीलने चावश्यं करणीयादपेक्षितादायासाद् विभीताः सन्तः किंचिदुन्मनीभूत्वा प्रवदन्ति, यद् वैष्णवसम्प्रदाये भक्तिसमावेशः संहिताकालं न परामृशति संहितां च न भजते कथमपि भक्तिरियं परमप्रेमरूपा। तेषां मते तु वैष्णवानुमोदितं श्रद्धयाऽनुसृतं च तद् भक्तिरूपं न केवलं वेदेष्वेवापितु कर्मकाण्डप्रधाने सकलेऽपि वैदिकवाङ्मये नोपलभ्यते। पूर्वं तु भक्तिशब्दस्य प्रयोग एव नास्ति यदि कुत्रचिद् दृश्यतेऽपि तन्नासौ परमप्रेमरूपत्वमुद्घाटयति। प्राचीनभाष्यसरःस्ववगाहनेनापि सम्भजनविभागलाभादीन्येवार्थरत्नानि हस्तगतानि भवन्ति। निर्वचनपद्धत्या वेदार्थानामुद्घाटनपरो यास्कोऽपि भक्तिशब्दस्य 'भाग' इत्यर्थमेव समुद्घाट्य प्रदर्शयति निर्वचनभक्तान्। तदनेन ज्ञायते यद् वेदयुगे भक्तिरेव नासीत् नासँश्चेश्वराराधनतत्पराः भक्तिप्रवरास्तदानीम्। एवं सर्वथाऽनुपपन्न एव भक्तिसिद्धान्तो वेदेष्विति दिक्। अथास्त्यन्यदस्मादत्यन्तविपरीतं मतं नैकेषां वेदविदुषां यद् वेदेषु सर्वाङ्गपरिपूर्णा भक्तिः पदे पदे विद्युदिवाभाति प्रद्योतयति च परानुरक्तिं भजनीयां भागवतीं शक्तिं प्रति। सा च भक्तिर्भगवत् स्तुतिप्रार्थनोपासनादिरूपत्रयात्मिका श्रुतौ संलक्ष्यते। त्र्यङ्गरूपाया अस्याः भक्तेर्वेदेषु बहुविधं वर्णनं विद्यते। परं सन्ति केचन एतादृशा विद्वांसोऽप्यत्र भूतले ये विकासवादस्योपनेत्रं संधार्य वैदिकभक्तिषु विकासस्य क्रमोपचयत्वमवलोकयन्ति।

---

१ तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये०। श. प. १४।४।२।२३

बुद्धौ तु तेषां वेदोक्तयज्ञयागजपध्यानादीनामेव प्रवेशो जायते परं न भक्तेः। तत्र हेतुरयं विष्णुदेवताकसूक्तेषु भक्तेरभावः कर्मकाण्डपरत्वं च श्रुतीनाम। वेदप्रतिपादितायां त्र्यङ्गरूपायां भक्तौ यथाकञ्चित् स्वीकृतायां सत्यामपि तस्याः वैष्णवभक्तेर्न्यूनत्वमेव मन्यन्ते। एवमन्येऽपि बहवो हेतुवादाः प्रस्तूयन्ते बहुभिर्विद्वद्भिः। अस्मिन् विषये वयमत्र विस्तरेण स्वविचारान् तु न प्रकाशयिष्याम परं सक्षेपेण किञ्चिदुच्यते।

वेदाः प्राचीनतमा इत्यत्र नास्ति कस्यापि विप्रतिपत्तिः। तेषामध्ययनाध्यापनपरम्परायाः प्रभङ्गात् तत्रनिहितशब्दानां तथ्यं युक्तञ्च स्वरूपनिर्धारणं दुःशकमिति निभालयन्तां सुधियः। अनया दृष्टया वेदोक्तस्तुतिप्रार्थनोपासनादिशब्दानां तथान्येषामपि बहूनां सुगूढशब्दानामियत्ता स्वरूपनिर्धारणं वा नास्ति सुकरम्। वेदेषूपासनाशब्दस्य प्रयोगप्राचुर्यं दरीदृश्यते। तत् किमयमुपासनाशब्दः समग्रं भक्तिप्रदेशं पिधातुं नार्हति? किमसौ सकलं भक्त्यासनं नाध्यास्ते? किमुपासनायां नास्त्युल्लासविशेषो मनसः? किमीश्वरं प्रति परमप्रेमरूपत्वं परानुरक्तिं वा नाभिव्यञ्जयति? "मय्यावेश्य मनो ये नित्ययुक्ता उपासते" इति भगवता श्रीकृष्णेनोदीरितोऽयमुपासनाशब्दः किं स्वस्मिन् भक्तिं न निधत्ते? एवं सन्ति नैके प्रश्ना ये समाधानमपेक्षन्ते। अस्मन्मते तु उपासना शब्दोऽयं भक्तेरपि बहुव्यापिक्षेत्रमधिकरोति। जपध्यानयोगादिभिः साकं भक्तिरपि तस्या गर्भे समाविष्टेति मन्तव्यम्। तत्कथमिति विचार्यते---

उपासनाशब्दस्य निष्पत्तिजन्यः सत्योऽर्थः (उप+आसना) स्वकीयाराध्यदेवस्य गर्भमुपेत्य तत्र निषदन (उपसमीपे आसनम्) मथवाऽऽराध्यादेवस्य सामीप्यं सान्निध्यं समीपस्थितिर्वेति बहुभिः शब्दैर्व्याख्यातुं शक्यते। भगवतः परमपुरुषस्य सान्निध्यं जपादिना वा भक्त्या वा येनकेनाऽप्युपायेन वा लब्धुं पार्यते चेदसावुपाय उपासनासीमायामापतति इति मन्तव्यं श्रद्धावनतैः समुपासकैः। वस्तुतस्तु भगवदुपलब्धिप्रदानां साधनानामुपासना तु परिणाम.। अथवा परमलक्ष्यस्य सन्निहिता सकलानां साधनाञ्चान्तिमा कोटिरियमुपासनेति वक्तुं नासमञ्जसम्। तदुपलब्ध्यै भक्तिरपि विद्यते एकं साधनम्। अनया दृष्टया तु वयमेतद् वक्तुं पारयामो यद् भक्तिरखिलमुपासनावितानं नावृणोति। सा त्वस्त्येकमङ्गमुपासनाया इति प्रकल्पनं चेन्नेदमपलपितं स्यात्। एवं व्युत्पत्तिबलान्नि.सीमोऽयमुपासनाशब्द. संकोचमापद्य भक्त्यै कथं कदा च रूढतामवापेति न विवेक्तुं शक्यतेऽस्माभिरेतत्तु तथ्यान्वेषणपरैर्विचक्षणैर्निरीक्षणीयम्। अस्माभिरेतदवधातव्यं यत् स्तुतिप्रार्थने अस्या गर्भे समाविष्टे ऋभुसंज्ञावत् (ऋभुरिति त्रयाणां संज्ञा—ऋभुर्विम्वावाज इति)। एवं त्र्यङ्गरूपाया उपासनानाम्न्या वैदिकभक्तेर्वेदेषु प्रमुखं वर्णनं विलोक्यते। परमस्माभिरत्रैकोऽन्य एव शब्दो भक्तेः प्रतिनिधिरूपेण पूर्ववर्तिरूपेण वा भवतां समक्षं प्रस्तूयते, स शब्दः गायत्रीत्यभिधीयते। अस्य गायत्रीशब्दस्योल्वणात् पूर्वमेतदपि विचारणीयं विद्यते यद् विष्णुदेवताकमन्त्रेषु भक्तेरुपासनाया वा वर्णनमुपलभ्यते न वा? यत्र श्रुतौ वरुणेन्द्राग्न्यादिदेवतास्वरूपेण परमपितरं परमेश्वरं प्रतिगन्त्री सर्वसमर्पणात्मिकाव्यभिचारिणी भक्तिः पदे पदे लोचनविषयत्वमापद्यते न तथा विष्णुदेवताकमन्त्रेषु। तत्र स्तुतिप्रार्थनोपासनादिशब्दैस्तद्भावाभिव्यञ्जकैर्वान्यैः शब्दैर्विहिताभक्तिर्मनागपि नोपलभ्यते। अत एव प्रायशो

बहूनां विद्वद्धौरेयाणामपि मतमेतन्निश्चप्रचमिव प्रतीयते यच्छ्रुतौ तु भक्तिर्विष्णुमीषदपि न परामृशति अतस्तेषामेष राद्धान्तो यत् क्रमिकविकासस्यैव परिणतिरियं वैष्णवसम्प्रदाये भक्तिसत्ता। परमस्त्यस्माकं मतवैपरीत्यमस्मिन् विषये। विष्णुदेवताकमन्त्रेषु तत्सम्बन्धिवैदिकवाङ्मयेषु च सन्त्यणुगर्भगुप्ता हृद्यात् समुद्रादुत्थायीनि भक्तिरसभरितानि पृषन्ति यान्यन्ते धारारूपेण प्रवहन्ति। अतोऽधुना वयं श्रुत्युक्तविष्णोर्भक्तिसम्बन्धं विमृशाम नाम।

## भक्ति-गायत्रीः

भक्तिधाराया आद्यं स्रोतः गायत्री। गायत्रीस्वरूपं किञ्चिद् विस्तरेणास्माभिर्विष्णोः प्रथमपादस्य व्याख्यानावसरे प्रदर्शितम्। अत्र संक्षेपत इदं व्याहर्तुं शक्यते यद् गायत्र्युत्पत्तौ गानमेव प्रधानं साधनम्। गायत्र्याः पूर्वं रूपं संगीतध्वनौ सन्निहितम्। अत्र दैवतब्राह्मणम्—"गायतेः स्तुतिकर्मणः गायतो मुखादुदपतत्" स्तुत्यात्मकाद् गै धातोर्निष्पन्नोऽयं गायत्रीशब्दः। इयं पक्षिणी गायत्री गायतो जनस्य मुखादुत्पद्यते। श्रुतावप्युक्तं "गायन्ति त्वा गायत्रिणः" ऋ. १।१०।१। हे इन्द्र! गायत्रीधारिणो भक्तास्त्वां गायन्ति। बलैश्वर्यसम्पन्नमिन्द्रनामानं भगवन्तं तन्मयो भूत्वा गायति भक्तः। गीते रममाण एव यदा गायति तदैव गायत्री संजायते। इमं भावं शातपथीयसूक्तिसारोऽपि निर्दिशति तद् यथा—हैतद् यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते। श. प. ६।१।१।१५। अनेन वयं वक्तुं प्रभवामो यद् गायत्र्यपि परमेश्वरं प्रति परमामनुरक्तिं द्योतयति। अन्यच्च छन्दांसि प्राणा उच्यन्ते तत्र गायत्र्यपि प्राण एव। एते प्राणाः शरीराभ्यन्तरवर्तिभ्यः सामान्यप्राणेभ्यो विलक्षणाः सन्तोऽपि सामान्यप्राणैरेव कार्यकारिणो भवन्तीति मन्तव्यम्। एषां छन्दोऽभिधानां प्राणानामस्माक देहे न स्वरूपतः स्थितिः परं कार्येणैव ते विभाव्यन्त इत्यस्माभिरन्यत्र विष्णुदेवताकग्रन्थे स्पष्टीकृतम्। सत्यशास्त्रेषु प्रकीर्तित यत् सकलं वपुरभिव्याप्याधितिष्ठतां सर्वछन्दसां कनिष्ठा सत्यपि सैषा गायत्री सकलान्यपि छन्दांस्यतिक्रामति। गायत्रीप्राणस्यान्येषां प्राणानामभिभवने मनसः संगीतध्वनावत्यन्तं रमणमेव हेतुः। तत्तु मनस उल्लासविशेषजन्यदिव्यानन्दस्यैव प्रभावो येन सा सर्वछन्दसामभिभवित्री। एवमेव भक्तिरप्यस्त्येको विशिष्टः प्राणो यः सर्वमपि प्राणायतनं देहं स्वायत्तीकरोति। अतो भक्तिसाम्यं तु तस्याः गायत्र्याः सुतरां स्पष्टम्। तदधुना विचार्यते—अथ चेद् गायत्र्याः स्थाने भक्तिशब्दस्तदानीं प्रोच्चारितो भक्तिभावभरितैरर्वाक् कालीनैर्भवतैस्तन्निसर्गतः प्रश्नोऽयं हठात् प्रेरयति मानसं समाधानान्वेषणाय यत् कथं कदा कुतश्च नामपरिवर्तनं समजनि। तत् श्रूयताम्—भक्तिशब्दः 'भज् सेवायाम्' धातोर्निष्पन्नः। सेवापरिचर्या वाऽत्र मुख्यो हेतुः। यदा वैष्णवानां मतेन निराकारोऽय सर्वव्यापी भगवान् साकारं देहमवाप। देहधारिणम् भगवन्तं श्रीकृष्णमीश्वरावताररूपेण जनाः स्वीकृतवन्तस्तदारभ्य गायत्रीस्थाने भक्तेर्नाम प्राचलदित्यूह्यतेऽस्माभिः। निदर्शनन्त्वस्य पुराणादीनि भगवद्गीता च। एषु ग्रन्थेषु भक्तेर्विशदं वर्णनं समुपलभ्यते। एभ्यः पूर्ववर्तिवैदिकवाङ्मयेषु च भक्तिशब्दस्य प्रयोग एव नास्ति यदि कुत्रचिद् भक्तिशब्दस्य दर्शनमपि जायते तदन्यस्मिन्नेवार्थे। अस्य तात्पर्यमेतद् यद् 'भज् सेवायाम्' धातोर्निष्पन्नः परानुरक्तेरभिव्यञ्जको भक्तिशब्दोऽर्वाक्कालीनः। गायत्रीशब्दस्य विस्मरणे तत्स्थाने च भक्तिशब्दस्य प्रचलने नैके

हेतवः पुरः स्थापयितुं शक्यन्ते । तथापि तत्र हेतुद्वयं प्रधानं विद्यते । प्रथमस्तावत हेतुरयं यदसौ कालो वेदयुगस्य समाप्तिसूचकआसीत् । विद्वांसो वैदिकपरिभाषाणां सत्यं स्वरूपं व्यस्मरन् । द्वितीयस्तावत् तस्मिन्काले जना ईश्वरावताररूपेण भगवन्तं कृष्णं स्मारं स्मारमभजन्त । यदा स्वयमीश्वरो वपुष्मान् भूत्वा सम्मुखे समुपस्थितस्तस्य सेवैव वास्तविकी भक्तिर्भवितुमर्हति । सेवकोऽस्य प्रभोर्दासः स्व स्वामिनः परिचर्याकरणमेव परमोद्देश्यत्वेनोररीकरोति । अस्यामवस्थायां सत्यां देहधारिणं भगवन्त श्रीकृष्णाभिधं पतिं भजमाना भक्तिरियं स्वसपत्नीत्वेन गानवपुष्मतीं तां गायत्रीं देवीं कथं प्रसहेत ? तत्तु प्रकृतिसिद्धमेतत् यन्नूनं गायत्र्याः स्थानं भक्तिरवाप्स्यति । तदनन्तरं भगवति श्रीकृष्णे स्वर्याते सति देहरूपेणानवस्थितत्वात्सेवास्वरूपिणी भक्तिः प्रतिमायां चरितार्था भवत्येवेत्यव्याहतत्वं तस्याः सुतरां स्पष्टम् ।

## त्रिपद्यां गायत्रीछन्दसः प्रथमं स्थानम्

विष्णोस्त्रिपद्यां प्रथमं पदं गायत्र्या निष्पाद्यते । अवशिष्टं पदद्वयं तु त्रिष्टुभा जगत्या च पूर्यते । अस्ति चेद् भक्तेर्वैदिकं नाम गायत्री तद् वयं त्रिपद्याः आधारेणैतद् वक्तुं प्रभवामो यत् गायत्री भक्तिर्वा नास्ति चरमासृतिः यतो हीतोऽप्यग्रे विद्यतेऽनुसरणीयं सरणिद्वयं त्रिष्टुब्जगत्याख्यम् । परं सोमाहरणवेलायां त्वियं श्येनरूपधारिणी गायत्री एव सक्षमा दिवः सोमाहरणक्रियायां न त्रिष्टुब्जगत्यौ । सोमश्च दिव्यानन्दस्यैवापरं नाम । अतः गायत्री दिव्यानन्दस्य जननीति सुतरां स्पष्टम् ।

अनेन ध्वन्यते यत् प्रथमे स्थाने स्थिताऽपीयं गायत्री सच्चिदानन्दरूपस्य भगवतः परमपुरुषस्यानन्दमय दिव्यं कोषं मानुषच्चेतसि जनयित्वा सततसंरक्षिणी । गायत्र्यां भक्तौ वा दिव्यानन्दस्य पराकाष्ठा विभाव्यते । अन्ते च सच्चिदानन्दमयं प्रभुं भक्तायोपायनीकरोति सेत्येतादृशो विद्यतेऽस्याः पक्षिण्या अद्भुता शक्तिः । भक्तस्तु दिव्यानन्दमयं सोमरसं मनोहृत्य पिबति तदपि नाभिलाषनिवृत्तिर्जायते तस्य । अस्त्येतादृशोऽयं भक्तिरसोऽवर्णनीयश्च तदुत्पन्न आनन्दः । अहो? अपूर्वोऽनपरश्च भक्तोऽयं जन्तुर्भगवता सृष्टो यस्योदरदर्यां समाविष्टोऽप्यमानन्दरूपो भगवान् स्वयमात्मानं हुत्वाऽपि नालं जठरस्य पूर्त्यै । परं तथापि सन्त्येतादृशा विचक्षणवर्तीं वाचं भाषमाणाः प्रकृष्टप्रज्ञावन्तो महाभागा ये गायत्रीं प्रथमपद एव स्थापयितुं समुत्सुकाः । यतोहि गायत्र्युत्तरं त्रिष्टुब्जगत्योः स्थानमिति तेषामभिमतम् । अन्यच्च भक्तजनाः भक्ति मनस उल्लासविशेषरूपेण मानसवृत्तिं मन्यन्ते परं शास्त्रेषु त्रैगुण्यमयीं स्थितिं त्यक्त्वा निस्त्रैगुण्यमय्यां स्थितावारोहणं पुरुषस्य प्रतिपादितमतो मानसवृत्तिरूपेयं स्थितिः कथं चरमा स्थितिर्भवितुमर्हति । "परानुरक्तिरीश्वरे" इति परानुरक्तिं भगवदुपलब्धौ सोपानमात्रमेव व्याहरन्ति केचन ब्रह्मवादिनः । अद्वैतवादिनां मते तु स्तुतिप्रार्थनोपासनाभक्तिगायत्र्यादीनां सुस्पष्टं सुतरामवरकोटौ समारोपणम् । 'तत्त्वमसि' 'ब्रह्मैवसन् ब्रह्माप्येति' ब्रह्मभावे सति सर्वं विलुप्यति । तत्र पिता अपिता, माता अमाता, लोका अलोकाः देवा अदेवा एवं सर्वमेकमेवाद्वितीयमिति जायते । अतोऽद्वैतमते भक्तिर्न चरमा स्थितिः । द्वैतागम एव भक्तिः स्वस्थानं लप्स्यत इत्यामनन्ति विचक्षणाः ।

—०—

# विष्णो नु कं वीर्याणि प्रवोचम्

श्री रामनाथो वेदालंकार., एम ए

विष्णो, त्वं जगति महामहिमसम्पन्नोऽसि । ब्रह्मा लोकानामुत्पादक, त्वं धारकः, शिवश्च संहारक इति जना व्याहरन्ति । लोके केचिद् ब्रह्मपूजका, केचित् त्वद्भक्ता, केचिच्च शिवोपासकाः । कदाचित् ते परस्पर कलहायन्तेऽपि । पर तत्त्वतस्तु एकस्यैव परमात्मनो रूपत्रयीयं प्रख्यायते ब्रह्मविष्णुशिवात्मिका । यथा, एक एव पुरुषो वस्तुविक्रयणकाले वणिक्, सभासंचालनसमये सभापतिः, गृहप्रबन्धवेलायां च गृहपतिरुच्यते, तथैकोऽपि परमेश्वरः सर्जनकाले ब्रह्मा, पालनसमये विष्णुः, संहरणदशायां च शिव इति ख्याति लभते । निखिलैर्वेदादिशास्त्रैः, पुराणैः, काव्यैश्च समर्थितोऽयं विषयः ।

**त्वमग्ने इन्द्रः ' त्वं विष्णुः ' त्वं ब्रह्मा त्वमग्ने रुद्रः । ऋग्वेदः २।१ ३–६**

**एकं सद् विप्रा बहुधा वदन्ति । ऋग्वेदः १।१६४।४६**

**सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । ऋग्वेदः १०।११४।५।**

**स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् ।**
**सोऽर्यमा स वरुणः स रुद्रः स महादेवः ॥**
**अथर्ववेदः १३।५।१२**

इत्यादिवचोभिर्भगवती श्रुतिः सर्वेषां देवानामेकत्वं प्रतिपादयति । पुराणान्यपि सुव्यक्तमुदीरयन्ति ।

**सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाः ।**
**स संज्ञा याति भगवानेक एव जनार्दनः ॥**
**—वह्निपुराणम् ।**

**सृष्टिस्थित्यन्तकरणादेक एव महेश्वरः ।**
**ब्रह्मा विष्णुः शिवश्चेति संज्ञामाप पृथक् पृथक् ॥**
**कालिकापुराणम् ।**

**यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा सोऽहमेव च ।**
**वेदत्रयेऽपि यज्ञेऽस्मिन् पण्डितेष्वेष निश्चयः ॥**
**—वराहपुराणम् ।**

कविकोकिलः कालिदासोऽप्याह कुमारसम्भवे–

**एकैव मूर्तिर्बिभिदे त्रिधा सा**
**सामान्यमेषां प्रथमावरत्वम् ।**
**विष्णोर्हरिस्तस्य हरिः कदाचिद्**
**वेधास्तयोस्तावपि धातुराद्यौ ॥७।४४**

तस्यैव रघुवंशे देवा विष्णुं स्तुवन्तो गायन्ति–

**नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।**
**अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥**
**१०।१६**

महाकविर्बाणभट्टः कादम्बरीमङ्गलाचरणप्रसङ्गे ब्रह्मविष्णुमहेशानामेकत्वमित्थं चारु चित्रयति––

**रजोजुषे जन्मनि सत्त्ववृत्तये,**
**स्थितौ प्रजानां प्रलये तमःस्पृशे ।**
**अजाय सर्गस्थितिनाशहेतवे,**
**त्रयीमयाय त्रिगुणात्मने नमः ।**

एव विष्णुरयं परमात्मनोऽभिन्न एव । विष्णुपदं च 'विष्लृ व्याप्तौ' इति धातोर्निष्पद्यमानं परब्रह्मणः सर्वव्यापकतां प्रदर्शयति । वेवेष्टि व्याप्नोति चराचरं जगदिति विष्णुः अयमेव तस्य गुणः पौराणिककथाकारैरित्थं कीर्त्यते । पुरा किल बलिर्नाम दैत्यो बहुदक्षिणं यज्ञमुपक्रान्तवान् । ततो देवानां भयं बभूव मा तावन्महेन्द्रस्य महेन्द्रपदच्युतिर्भूदिति । ते च विष्णुशरणं प्रपन्नाः । विष्णुरुपायं दर्शितवान् वामनावतारं गृहीत्वाऽहं बलिं प्रतारयिष्यामीति । ततो यज्ञान्ते वामनरूपो विष्णुर्धृतविप्रवेषो बलेरन्तिकं प्राप्य त्रिपदपरिमितां भूमिं ययाचे । अङ्गीकृतश्च तेन विराड्रूपमाश्रित्यैकेन पदेन भूमिं, द्वितीयेन चाकाशं परिममे, तृतीयं च तन्मूर्ध्नि निदधौ ।

एवं तच्चरणत्रये त्रिलोकी व्याप्ताभूत् ।

वेदेष्वपि विष्णुरेष बहुधा स्तूयते—

**विष्णोर्नु कं वीर्याणि प्रवोच**
**यः पार्थिवानि विममे रजांसि ।**
**यो अस्कभायदुत्तरं सधस्थं**
**विचक्रमाणस्त्रेधोरुगायः ॥**

**ऋग्वेदः १।१५४।१**

अहं सर्वव्यापकस्य देवस्य विष्णोः पराक्रमपूर्णानि कार्याणि कीर्तयामि । स हि प्रभूतकीर्तिस्त्रिषु स्थानेषु चरणनिक्षेप कुर्वाण. सर्वान् पार्थिवलोकान् ऊर्ध्वलोकांश्च तथैव परिमाति यथा मानदण्डेन कश्चिच्छिल्पकारः काष्ठकुड्यादिकं परिमिमीते ।

**प्र तद्विष्णुः स्तवते वीर्येण**
**मृगो न भीमः कुचरो गिरिष्ठाः ।**
**यस्योरुषु त्रिषु विक्रमणेषु–**
**अधिक्षियन्ति भुवनानि विश्वा ॥२॥**

विष्णुरसौ जगतीतले सर्वत्र स्वमहिम्ना स्तूयते । सिंहो यथा विकरालदंष्ट्राभि निशितनखरैश्च सर्वप्राणिभयंकरस्तथायं विष्णुरपि पापिनां त्रासजनकः । सिंहवदयं भूमौ स्वच्छन्दं विचरणशीलः । सिंहो यथा गिरिगह्वरेषु तिष्ठति, तथायमपि गुहानिहितो योगिनामप्यगम्यः । एतत्सदृशः कोऽन्यो भवितुमर्हति यो हि त्रिभिरेव पादै. सकलान्यपि भुवनानि समाश्रयेत् ।

**प्र विष्णवे शूषमेतु मन्म**
**गिरिक्षित उरुगायाय वृष्णे ।**
**य इदं दीर्घं प्रयतं सधस्थ–**
**मेको विममे त्रिभिरित् पदेभिः ॥३॥**

विष्णुरयं गिरिक्षिद् भवति । अधस्थान् अस्मानपेक्ष्य गिरिवदुन्नते स्थाने निवसति, सर्वोच्चपदमधितिष्ठति । बहुभिर्भक्त्यजनैर्गीयमानोऽय समस्तसुखसलिलवर्षको मेघः सजायते । एकाकी निस्सहायोऽपि त्रिभिरेव चरणैः सुदीर्घ सुविस्तीर्ण ब्रह्माण्डमण्डलमिदम् इयत्तया परिच्छिनत्ति । एतादृशे प्रचुरगुणगरिमशालिने प्रभवेऽहं स्वकीय सबलम् अन्तस्तलनिसृतं स्तोत्र प्रवाहयामि ।

**यस्य त्री पूर्णा मधुना पदानि**
**अक्षीयमाणा स्वधया मदन्ति ।**
**य उ त्रिधातु पृथिवीमुत द्याम्**
**एको दाधार भुवनानि विश्वा ॥४॥**

अस्य विष्णोस्त्रीण्यपि चरणनिक्षेपस्थानानि मधुना परिपूर्णानि । प्रथमं स्थानं भूमिः, अत्र च अन्नफलमूलशाकपयःप्रभृतीनि नानाविधानि सुमधुराणि वस्तुजातान्युपलभ्यन्ते, यैरस्माक जीवनं ध्रियते । द्वितीयं स्थानमन्तरिक्षं, यत्र पवनमेघचन्द्रकिरणादिको मानवानां जीवनदायको वस्तुनिकरः प्राप्यते । तृतीयं स्थान द्यौः, यत्र निखिलप्राणिनां प्राणदायकः सूर्यो विराजते । सर्वाण्येतानि मधूनि कदापि न क्षीयमाणानि सकललोकान् सुखयन्ति । विष्णोरेव गौरवमिदम् । स च विष्णुरेक एव पृथिवी, द्यां, विश्वानि च भुवनानि धारयति पालयति च ।

**तदस्य प्रियमभि पाथो अश्यां**
**नरो यत्र देवयवो मदन्ति ।**
**उरुक्रमस्य स हि बन्धुरित्था**
**विष्णोः पदे परमे मध्व उत्सः ॥५॥**

विष्णोर्मोक्षाख्ये परमे पदे मधुररसस्य निर्भरः प्रवहति । विष्णुपूजका मुक्तिभाजो जनास्तत्रैवानन्दनिर्भरे स्वान्तस्तृप्तिमनुभवन्ति । अहमपि तस्यैव रसनिर्भरस्य पयोबिन्दून् पातुमिच्छामि । हे विष्णो, कृपां मयि विधेहि । त्वच्चरणकमलचञ्चरीको भूत्वा मधुपाननिरतोऽहं सदा कृतकृत्यो भवेयम् ।

महाविदुषां वैदिकज्ञानविज्ञानतत्त्वविदां श्री पण्डित सातवलेकर महोदयानां

## अभिनन्दनम्

कविवरः--श्री जनमेजयः विद्यालङ्कारः

( १ )

योगे पतञ्जलिसमोऽसि जितेन्द्रियोऽसि,
श्रीकृष्णतामुपगतोऽसि च कर्मयोगे।
द्वैपायनस्त्वमसि वैदिकतत्त्ववेत्ता,
वन्दे महापुरुष ते चरणारविन्दम् ॥

( २ )

मुख्योऽसि पौरुषवतां विदुषां वरेण्यो,
वेदोदयाय कृतवानसि भूरि यत्नम् ।
सम्मानपात्रमसि सर्वजनस्य भूयो,
वन्दे महापुरुष ते चरणारविन्दम् ॥

( ३ )

धन्या मही च खलु दक्षिणभारतस्य,
या त्वामसूत जगतीतलरत्नभूतम् ।
धन्यौ तथैव पितरौ तव जन्मदौ यौ,
वन्दे महापुरुष ते चरणारविन्दम् ॥

( ४ )

अस्मादृशाश्च बहवः खलु धन्यधन्याः,
ये शिष्यतामुपगतास्तव पुत्रतुल्याः ।
मार्गप्रदर्शकतमोऽसि सदैव येषां,
वन्दे महापुरुष ते चरणारविन्दम् ॥

( ५ )

श्रीपाद इत्यभिहितोऽसि निजेन नाम्ना,
दामोदरस्त्वमसि सातवलेकराख्यः ।
देशस्य रत्नमसि भूषणमार्यजातेः,
वन्दे महापुरुष ते चरणारविन्दम् ॥

( ६ )

पुण्यं यशः सुखसमृद्धिमनामयत्वं,
नित्यं लभस्व कृपया जगदीश्वरस्य ।
जीव्याद् भवांश्च शतकद्वयवर्षसङ्ख्यम्,
वन्दे महापुरुष ते चरणारविन्दम् ॥

*

# वेदेषु विष्णु-तत्त्वम्

शाङ्करवेदान्त-दर्शनाचार्य्यश्रीनरहरिभट्टः

वेदादिसच्छास्त्रे कृतभूरिपरिश्रमाः! भारतीय-संस्कृतिसंरक्षकाः! विद्वत्सम्राजो महामान्याः! आचार्य्यशिरोमणयः! गुरुकुलपत्रिकायाः प्रियपाठकप्रवराः!

इतः प्राग्वैशाखे मासि "शिक्षा"–विशेषांकस्तत्रास्मदक्षिगोचरोऽभूत्सम्प्रत्यचिरादेव 'विष्णुतत्त्वाङ्क'"न. पुरस्तादुपसर्पतीति महान्प्रमोदावसरः। अयमप्येकस्सुतरां प्रशस्तः पन्था निगमादिसच्छास्त्ररक्षायाः प्रसारस्य च।

भारतीयसंस्कृतवाङ्मये सर्व्वाङ्गीणानां वेदानां सर्व्वोत्कृष्टत्वं समस्तीति कस्य भारतभावुकस्याविदितमिति। ब्राह्ममूहूर्तादारभ्य शयनवेलापर्य्यन्त,जन्मतो मरणपर्य्यन्तञ्च करणीयं निखिल कर्म्मजातमादिश्य निगमागमशास्त्रं कल्याणपथि प्रेरयति समस्तान्मानवनिकरान्। लोके न हि तदस्ति किंचिद् यद्वेदेन न विज्ञायते। अतो मनुना प्रोक्त—**'सर्व्वज्ञानमयो हि सः'** भारतेऽपि **'सर्व्वं विदुर्वेदविदो वेदे सर्व्वं प्रतिष्ठितम्'** अपि चोक्तं—**'य कश्चित्कस्यचिद्धर्म्मो मनुना परिकीर्तितः। स सर्व्वोऽभिहितो वेदे'** इदन्निश्चप्रचं यन्नहि कोऽपि धीमान्वेदस्यौनत्वं साधयितुम्प्रभवेत्। **'वेदोऽखिलो धर्ममूलम्'** इति मनुना स्वयमभिहितम्।

केचनैकदेशिनो विद्वांसो ब्राह्मणग्रन्थान्वेदे न समावेशयन्ति परं जैमिनीमहर्षिणा—व्यज्ञायि—निरणायि—अभिहितञ्च—**'मन्त्र ब्राह्मणयोर्वेदनामधेयमि-'ति**। मन्त्रब्राह्मणयोर्विष्णोस्स्वरूप वक्ष्यमाणप्रकारेण संदर्शित तच्च दिङ्मात्रमत्रोच्यत इति प्रस्तुतशीर्षकविषयः—

**'विष्लृ व्याप्तौ'**—पाणिनीय धातुपाठे परिपठितम्। तत्रैव **'विश्-प्रवेशनेऽपि धातुर्दृश्यते। आभ्यां द्वाभ्यां' विष्णु**' रिति प्रसिद्ध चतुर्षु वेदेषु विष्णुपदं प्रसिद्धयति। तत्र यास्केनापि निघण्टावभ्यधायि—**'अथ यद्विषितो भवति तद्विष्णुर्भवति, विष्णुर्विशतेर्वा व्यश्नोतेर्वा'** आभ्यामेकार्थ एव सिद्धयति। व्युत्पत्तिभेदेन धातुभेदेन वा मुख्यार्थे व्यत्यासो न मन्तव्य तत्र-मारिषै.। सोऽपि कुत्रचिद्भवति, अस्मिन्विषये नाग्रहोऽस्माकम्। अधस्तनमीमांसया स्पष्टीभविष्यति।

(१) **'विष्लृ व्याप्तौ'**—यदा विषितो व्याप्तश्चराचरजगति-वेवेष्टिर्नां-तदानी-विष्णुर्भवति—यथा हि मन्त्रपदेनापि तस्य व्यापकत्वं स्फुटीभवति। **"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्।"** अयमभिसंधि.—इव=यथा। **'इवेत्थमर्थयोरेवं'** इत्यमरः। **'इव'** शब्दः—उपमाद्योतकः, प्रकारवाचकोऽपि। अप्पय्यदीक्षितकृत-**'कुवलयानन्द'**—नामके आलंकारिके ग्रन्थे पद्यमायातं—**'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः॥"** यथा चैत्रस्तथा मैत्र.। शारदाभ्रमिव पेलवमायुः। अत्रेव शब्द उपमावाचकः, प्रकारवाचकत्वाङ्गीकारेऽपि न काचित् क्षतिः। दिवि=अच्छाकाशे, आततं=अंशुभिर्विषितं-व्याप्तं, चक्षुः=सूर्य, **'सूर्यस्सर्वलोकस्य चक्षुः'** सर्वे स्थूराः जागतिकाः। पश्यन्ति=दृग्गोचरीकुर्व्वन्ति। तथा=तथैव **'यत्तदोर्नित्यस्सम्बन्धः'** इति न्यायेनाध्याहारकरणे न काचिद्धानिः "तथैव" इत्यत्र एव पदयोगेनार्थे सौष्ठवमायाति। विष्णोर्विश्वव्यापकस्य परमात्मनः। परमं = उत्कृष्टं, पदं = मोक्षाख्यं स्थानं, सूरयः = दूरदर्शिनो विद्वांसस्सदाऽपरोक्षरूपेण पश्यन्ति = परिपश्यन्ति-अवलोकयन्ति अर्थात्साक्षात्कुर्व्वन्ति। अत्र मन्त्रेण स्पष्टीभवति यदसौ विष्णुः परमात्मा चराचरमधिष्ठाय तिष्ठति। स च व्यापक एव भवितुमर्हति। अन्यमपि विष्णोर्व्यापकत्वे वचनं—

**यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्व्वं व्याप्य नारायणस्स्थित. ।।**
( ना. उ. )

(२) **'विश्-प्रवेशने'**—यदा प्रविष्टो भवति, तदाऽपि विष्णुर्भवति । यथा गृहपतिर्गृहस्वामी, गृहं प्रविश्य तत्रस्थानां वस्तूनां परिज्ञाता भवति । परन्तु लौकिकगृहपतिरिव परिच्छिन्नो नहि भवति । यतो हि ऋग्वेदेऽयं मन्त्रो दृश्यते । **'त्वं विष्णुरुरुगायो नमस्यः'** अयमभिप्रायः—त्वं सर्व्वव्यापकस्सर्व्वान्तरो विष्णुः परमात्मा उरुगायः = उरुभिः = बहुभिर्जनैर्मान्यैर्विद्वद्भिर्गीयमानमहिमा । यो हि अल्पशक्तिरल्पज्ञः परिच्छिन्नश्च भवति स गीयमानमहिमा न भवति । स च व्यापक एव भवितुमर्हति । व्यापकमेव लोको नमस्यति । नाल्पज्ञं परिच्छिन्नं नमस्यति कोऽपि । अन्योऽपि मन्त्रोऽतुलसामर्थ्यं प्रकटयति । **'प्र तद्विष्णुः स्तवते वीर्येण'** सः = प्रसिद्धो विष्णुस्सबाह्याभ्यन्तरो ह्यजो भगवान् वीर्येण=स्वातुलसामर्थ्येन प्र-स्तवते = प्रकर्षेण स्तूयते पूर्वाचार्यैर्महर्षिभिः । व्यापकस्य विष्णोस्सर्व्वशक्तिमत्त्वं ऋग्वेदस्य पवमानमण्डले वर्णितम्—

**एष सूर्यमरोचयत्पवमानो विचर्षणिः ।**
**विश्वा धामानि विश्ववित् ।।**

सर्वे हि प्रतियन्ति यत्सूर्यस्सर्व्वाँल्लोकान् प्रकाशयति परन्तु स अन्तर्बहिर्भूतो व्यापको विष्णुः, सूर्यमपि प्रकाशयतीति । अनेन स्पष्टं व्यज्यते यत् कीदृशं तस्य सामर्थ्यम् । शतपथीयब्राह्मणमन्त्रेणापि विपुलपराक्रमसम्पन्नस्य विश्वाधिष्ठानस्य विष्णोः परममहत्त्ववर्णनं दृश्यते—

**विष्णोर्नुकं वीर्याणि प्रवोचं**
**यः पार्थिवानि विममे रजांसि ।**
**यो अस्कभायदुत्तरं सधस्थं**
**विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ।।**

अयमाशयः—विष्णोः = विश्वाधारकस्य परमात्मनो विष्णोः, वीर्याणि = नानाविधविचित्रपराक्रमसम्पन्नानि शोभनकर्माणि, प्रवोचं=वच्मि= अस्मि मन्त्रद्रष्टा प्रब्रवीमि-इति यावत् । नु-कं-इति निपातद्वयं-अवधारणार्थकं क्षिप्रार्थकं वा-कोषान्तरेणावधार्य्यते । यः = अनन्तवीर्यो विष्णुर्विचित्रशक्त्या पार्थिवानि = पृथिव्युपलक्षितानि-अन्तरिक्षादीनि समस्तानि दिव्यस्थानानि, विममे = निर्ममेरचितवानित्यर्थ. । रजांसि = ज्योतींषि = अग्निविद्युत्सूर्यात्मकानि तानि निखिलानि-विममे = रचयामास । यो विष्णुः—उत्तरं = उपरितनं, सधस्थं = द्युलोकादिस्थानं, अस्कभायत्=यथाऽधो न पतेत्तथा अधारयदित्यर्थः । त्रेधा विचक्रमाणः = त्रिप्रकारं लोकान्क्रममाणः, विष्णोस्त्रेधा क्रमणं श्रूयते ऋग्मन्त्रेण—**'इदं विष्णुर्विचक्रमे त्रेधा'** इति । अनेन भगवतो विष्णोस्सर्वशक्तिमत्त्वं सर्ववित्त्व चावसीयते । अतस्सः, उरुगायः = बहुभिर्विद्वद्भिश्चाजस्रं गीयते यस्य यशः । एवंभूताय विश्वरूपाय विष्णवे तद्भावापत्यर्थं हे मनः ! त्वा = त्वां समर्पयामीति निष्ठ्यूतार्थः । अस्य विशदार्थस्तु **'महेश्वरकृत-अध्यात्मज्योत्स्नातो'** विज्ञेयो वेदार्थमर्मजिज्ञासुभिर्भावुकैः ।

एवंभूतस्य सर्व्वशक्तिसमुपेतस्य नारायणस्य विष्णोस्सर्वस्य जगतः कारणत्वमभिहितं-कृष्णयजुर्वेदीयनारायणोपनिषदि—

**नारायणात्प्राणो जायते, मनस्सर्वेन्द्रियाणि च**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।**
**नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते**
**नारायणादिन्द्रो जायते, नारायणात्प्रजापतिः**
**प्रजायते ।।**

नारायणाद्द्वादशादित्या रुद्रा वसवः, सर्व्वाणिच्छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणात्प्रवर्तन्ते, नारायणे प्रलीयन्ते । अत्रोक्तं नारायणात्प्रेरितास्सन्तस्स्वस्वकर्मणि प्रवृत्ता भवन्ति पुनस्सर्वकारणे नारायण एव प्रलीयन्त इत्युक्तम् । अपि चोक्तं तत्रैव—

**अथ नित्यो नारायणः, ब्रह्मा नारायणः ।**
**शिवश्च नारायण, शक्रश्च नारायणः ।**
**कालश्च नारायणः, दिशश्च नारायणः**
**विदिशश्च नारायणः, ऊर्ध्वं च नारायणः**
**अधश्च नारायणः, अन्तर्बहिश्च नारायणः**
**नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।।**

नारायण विरहय्य नास्ति जगत् किंचिदिति निर्गलितोऽर्थः । स्वर्णादिबहुमूल्य धनप्राप्तये व्यापकविष्णुरेवाभ्यर्थ्यते शतपथब्राह्मणमन्त्रेण, यजुर्वेदेऽपि अस्य पाठो दृश्यते—

**दिवो वा विष्ण उत वा पृथिव्या**
**महो वा विष्ण उरोरन्तरिक्षात् ।**
**उभा हि हस्ता वसुना पृणस्वा,**
**प्रयच्छ दक्षिणादोत सव्याद् विष्णवे त्वा ।।**

**"श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे"**—इत्यत्र यजुर्वेदमन्त्रेण विष्णुरेव परमेश्वरतया प्रतिपाद्यतेऽभ्यर्थ्यते च कल्याणकामनया । स एकः परमात्मा व्यापको विष्णुरेव, यो हि अन्तर्बहिर्भूतस्सर्वत्र ओतः प्रोतश्च दरीदृश्यतेऽनुभूयते च लोकैः, कार्यभेदात् त्रिधा विभज्यते । **'एकं सद्विप्रा बहुधा वदन्ति ।** एक एव प्रसिद्धो विष्णुर्नानारूपेण कीर्त्यते कार्यसाधकैरुपासकैः—

**स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् ।**
**सोऽर्यमा स वरुणः स रुद्रः स महादेवः ।।**
**(अथर्ववेदः—१३।५।१२)**

इत्यादिवचनैस्सर्वेषामेकत्वं प्रतिपादयति श्रुतिः । पुराणवचनमपि प्रकारान्तरेणाभिधत्ते—

**सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाः ।**
**स संज्ञां याति भगवानेक एव जनार्दनः ।।**

एक एव भगवान् त्रिधा विभज्यत इत्युक्तमत्र । लोकेऽप्ययं न्यायो दृश्यते—

एक एवाध्यापको यदा छात्रानध्यापयति तदा स **"प्राध्यापकः"** इति संज्ञां लभते, स एव यदा अन्वेषणविभागे कार्यं विदधाति तदा अनुसन्धातेत्युदीर्यते, यदा स एव लेखनकार्यं कुरुते तदा स अक्षरचुञ्चुरिति व्यवह्रियते । इत्येव विविधकार्यकरणादेक एव पुरुषः पार्थक्येन नामकरणेन लोकैरभिधीयते तथैव एकोऽपि जगत्कर्ता विष्णुः परमात्मा सर्जन समये **'ब्रह्मा'**, सृष्टिस्थितिकाले **'विष्णु'**, संहारवेलायाञ्च **'रुद्र.'** इति सञ्ज्ञाभेदं लभते । तदेव मन्त्रवर्णमप्युपोद्बलयति—

**'सुपर्णं विप्राः कवयो वचोभिरेकं**
**सन्त बहुधाः कल्पयन्ति ।'**
**(ऋ. १०।११४-४)**

एकमेव परमात्मान बहुप्रकारेण कल्पयन्ति संज्ञाभेदात्, परमय नियमोऽस्ति **'यन्नामभेदान्न वस्तु भेद'** वस्तु—ब्रह्म-परमात्मा—स एव विश्वविषितो विष्णु, पृथग्नामभेदान्न भिद्यते—यथा हि—**'स ब्रह्मा, स शिवः, स हरिः, सेन्द्रस्सोऽक्षरः परमस्स्वराट्'** इत्यादिवचनैर्भगवती श्रुतिस्समेषां देवानामैक्यं बोधयति । वैष्णवपुराणेऽपि विष्णुतत्त्वं अभेदमभिधत्ते—

**सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।**
**स सञ्ज्ञां याति भगवानेक एव जनार्दनः ।।**

यो हि बुद्धिमान्द्याद्भेदं पश्यति तत्कृते शास्त्रं स्वयं व्याहरति—

**यो ब्रह्म विष्णुरुद्राणां भेदं तरतमभावतः ।**
**साधयेद्दुर्व्याधियुक्तो भवति मानवः ।।**

अभेददर्शिनं च शास्त्र स्वयमेव प्रशंसति—

**वेदानुवर्तिनो रुद्रं देवं नारायणं तथा ।**
**एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ।।**
**यो विष्णुस्स स्वयं रुद्रो यो रुद्रस्स जनार्दनः ।**
**इति मत्वा भजेद्देवं स याति परमां गतिम् ।।**

**'विष्लृ-व्याप्तौ' 'विश्-प्रवेशने'**—आभ्यां धातुभ्यां सुनिष्पन्नन्निगमागमप्रसिद्धं, विश्वाधिष्ठानं विष्णोर्व्यापकस्वच्छस्वरूपं विविधप्रमाणनिकरैः प्रसिद्धयतीति नास्त्यत्रविचिकित्सालवोऽपि । इति विरम्यते ।

—o—

# विष्णु—महिमा

कवयिता—श्री पं धर्मदेवो विद्यामार्तण्डः, ज्वालापुरम्

(१)

वेवेष्टि यो विश्वमिदं महिम्ना
तस्मादिहोक्तः खलु विष्णुनाम्ना ।
दयानिधानं तमनन्तशक्तिं
देवं भयभ्रान्तिहरं नमामि ॥

(२)

सर्वाणि दृश्यानि मनोहराणि
देवाधिदेवं प्रति मां नयन्ति ।
योऽनन्तविद्यो भगवान् दयालुः
सर्वान् पदार्थान् विदधाति दिव्यान् ॥

(३)

शक्नोति कस्तस्य महामहिम्नः
प्राप्तुं तु पारं प्रबलो मनीषी ।
हिमावृता पर्वतमालिकेयं
गायत्यजस्रं किल यस्य गीतम् ॥

(४)

सुरापगा यस्य यशोऽभिरामं
गायत्यनन्तस्य मुदा तरङ्गैः ।
द्रुमाः समस्ता हरिताम्बराणि
सन्धार्य चारूणि मनोहराणि ॥

(५)

व्यात्ताननाः यस्य वदन्ति विष्णोः,
कीर्तिं किरन्तः कुसुमानि तस्मै ।
प्रातः समुत्थाय खगाः कलेन
यं लोकनाथं मुदिताः स्तुवन्ति ॥

(६)

दिवाकरोऽयं च हिमांशुरेषो
ग्रहा असंख्या गगने चरन्तः ।
नीराजनं वै विदधत्यभीक्ष्णं
हिरण्यगर्भस्य दयामयस्य ॥

(७)

ब्रह्मा स विष्णुः स हरिः स शम्भुः
रुद्रः स मित्रो वरुणो गणेशः ।
इन्द्रो यमोऽग्निः स हि मातरिश्वा
सूर्यः सुपर्णः स तथा गरुत्मान् ॥

(८)

एतैरनेकैर्भुवि नामभिर्यं
मनीषिणोऽनन्तगुणं स्मरन्ति ।
तमेव देवं विमलं सुशेवं
नित्यं प्रपन्नोऽस्मि शमाभिलाषी ॥

(९)

शान्तिं स दद्याच्छरणागताय
ददातु मेधामचलां च भक्तिम् ।
विपत्सु सम्पत्सु दिवानिशं तं
देवं स्मरेयं मुदितो यथैकम् ॥



# कोऽयं विष्णुर्वैदिकः ?

श्री पं. उदयवीरः शास्त्री, गाजियाबादवास्तव्यः

यानि जगति दर्शनतन्त्राणि प्रथन्ते, तानि सर्वाणि खलु प्रतिकालं प्रतिदेशं जगद्व्याख्यानाय प्रवृत्तानीति नात्र कस्यचिद् विवादः । जगद्व्याख्याने खल्वय महानशः–कुतोऽयं लोक समुत्पद्यत इति ? अत्रापि केचिद् विप्रतिपत्तिमुद्भावयन्ति, उपवर्णयन्ति च नास्य जगतः कुतश्चिदप्युत्पाद, अनादिरय संसारः क्रमेणानेनैव प्रवर्त्तमानः सदा स्थिति लभते, उत्पादविनाशरहितः खल्वयं जगत्क्रमः- अस्योत्पादसंभावनैव कुतः ? तदा किमनया काकदन्तपरीक्षया, कुतोऽयं लोक उत्पद्यत इति । परं प्रतिक्षणं परिवर्त्तमानस्य परिणममानस्य वा जगतः सर्वथाऽप्युत्पादविनाशराहित्यसमुद्भावना निराधारैव भवितुमर्हति । न हि परिणममानं वस्तु कथमप्युत्पादविनाशरहितं संभवति । अतस्तदवस्थ एवायं प्रश्नः–कुत इद जगदुत्पद्यत इति ?

सर्वान्तर्यामी सर्वशक्तिः परमेश्वरः प्रकृतेरुपादानकारणाज्जगदिदं जनयतीति वैदिकाः । वेदेष्वन्यत् किमपि स्यान्न वा स्यात्, परमयं परमेश्वरः सकलजगदुत्पादकत्वेन बहुशो वर्णितो वर्त्तते वेदेष्विति समं मतं वेदविदाम् । वेदेषु परमेश्वरो बहुभिर्नामभिर्वर्णितः : तत्राऽस्त्येकं नाम विष्णुरिति । ऋग्वेदमात्रमभिलक्ष्य विचार्यते–कोऽयं विष्णुः ? इति परमेश्वरो वाऽन्यो वा कश्चित्पदार्थः ।

ऋग्वेदेऽत्यल्पानि सूक्तानि विष्णुदैवत्यानि । प्रथममण्डलान्तर्गते द्वाविंशतितमे एकविंशत्यृचे सूक्ते केवलं षडेवान्त्याः ऋचो वैष्णव्यः । तत्रापि षोडशी विकल्पिता-वैष्णवी स्याद् वैश्वदेवी वा ? स्यान्नाम विकल्पः, वैष्णवी सा, इति मत्वैवास्माभिर्वर्ण्यते । अत्र षट्सु ऋक्षु विष्णोर्वर्णनम्, तच्च विष्णोः परमेश्वरभावं स्फुटीकरोति । तत्र प्रथमा ऋक्—

**अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।**
**पृथिव्याः सप्त धामभिः ॥**

**यतो** यस्मादनादिकारणात् प्रकृतिभूताद् **विष्णुः** सर्वत्र व्यापकः सर्वान्तर्यामी चेतनः **पृथिव्याः** पृथिवीमारभ्य **सप्त** सप्तसंख्याकानि **धामभिः** धामानि सप्तलोकान् (धामभिरिति द्वितीयार्थे तृतीया,) अथवा पृथिव्या आरभ्य धामभिरन्यैः सह सप्त **विचक्रमे** विविधतया सप्तलोकान् भ्वादीन् सन्ध्यान्तर्गतप्राणायाममन्त्रवर्णितान् करोति विरचयति । अतो **देवा** विद्वांसो **नः** अस्मान् **अवन्तु** अवगमयन्तु बोधयन्तु । अथवा लडर्थेऽत्र **लोट्**, एवं विद्वांसो जगदुत्पत्तिप्रक्रियां बोधयन्तीति भावः । अत्र विष्णुः सर्वलोकसमुत्पादकत्वेन वर्ण्यते । नायं परमेश्वरमन्तराऽन्यः कश्चिद् भवितुमर्हति । अपरा ऋक्—

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**
**समूढमस्य पांसुरे ॥**

**विष्णुः** सर्वव्यापकः परमात्मा **इदं** दृश्यादृश्यं जगद्भूतं **पदं** वस्तुजातं **विचक्रमे** वैविध्येन करोति समुत्पादयति, कृत्वा च **त्रेधा** त्रिप्रकारेण **निदधे** निधत्ते स्थापयति, त्रिगुणमूलोपादानानुरूपं सकलं कार्यजातं त्रेधा त्रिगुणात्मकत्वेन सात्त्विक-राजस-तामस रूपेण व्यवस्थापयति, पृथिव्यन्तरिक्षद्युरूपेण वा विभज्य स्थापयति । अस्यां पृथिव्यां पृथिव्योषधिवनस्पत्यादयः, सुवर्णधात्वादयः, प्राणिदेहादयो वा; अन्तरिक्षे मेघविद्युद्वाय्वादयः, दिवि सूर्यचन्द्रनक्षत्रादयः संस्थापिताः । **पांसुरे** ऽन्तरिक्षे **अस्य** जगतोऽशभूतं यद् वस्तुतत्त्वम् तत् समूढं सम्यक्तया ऊह्यते तर्क्यत एव, केवलमनुमानादिना ज्ञायते, न तु प्रत्यक्षेणावलोक्यते । अयं भावः–अन्तरिक्षे यानि मेघादीनि वस्तुजातानि तानि सर्वाणि पृथिवीसम्बन्धीनि, ततः परं यद् वस्तुतत्त्वमन्तरिक्षे प्रसृतं त्रसरेणुतन्मात्रब्रह्मकिरणाद्यनेकविधं तत्सर्वं प्रत्यक्षतो नावलोकयितुं शक्यते, यथा पृथिव्यां दिवि वाऽनेके पदार्थाः

"त्वं मन्त्रिणं सूचयितुम्, यदहं प्राप्तास्मि ···।"

"हम नेई जायगा, टुम खराब गर्ल हाय ···।"
(नाहं यास्यामि, त्वं दुष्टा बालासि ··· )"

"तदाहं स्वयं प्रवेक्ष्यामि ··"

"हम नेई जाने डेगा (अहं त्वां प्रवेशान्निरोत्स्यामि)"

"न त्वं मां निरोद्धुं शक्तोऽसि ···।" इति निरातङ्का मन्त्रिणः शयनकक्षं प्रविश्य ।

"स मामनुद्रवन्नागतः— "( ऐ नाटी गर्ल ऐ नाटी ··· ?)

"तेन तस्य तारस्वरेण मन्त्रिणो नेत्रमुन्मुद्रितम् । क्रोधेन तन्तम्यमानोऽसाववोचत्—"ह्वाट नान्सेन्स? यह क्या शोर मचा रखा है ? (किमेतन्निरर्थकम् किमर्थमयं कोलाहल उत्थापितः ? )

"सर ! दिज् नॉटी गर्ल् ··!" (श्रीमन् ! इयम् उपद्रविणी कन्या ··· !"

"आगच्छतु, गच्छ त्वं बहिः ···।"

"गतोऽसौ, अहं स्मितमातानिषम्— "हाऊ सिली ही इज् डार्लिग् ···! कियत्तस्य मौर्ख्यम्, दयित ··।" ओ यस्, फार्गिव हिम् ! प्लीज सिट् हियर !" (आ एवम्, क्षम्यतां सः, कृपयाऽऽस्तामत्र भवती !"

"मया विहङ्गमदृष्ट्या शयनकक्षमवलोकितम्, उपस्पर्श धर मूल्यवन्ति कुथानि वैदेशिक्यो राजास्तरणकन्थाश्च समास्तृता आसन्, कौणकभागे आङ्ग्लेजपरिपाटीजुडैश्वर्यगुणमण्डितः पल्यङ्कः सज्ज आसीत् पल्यङ्कोऽङ्गविमर्दसहस्थूलस्थूलोदर आस्तरः तत्रापि कौशेयः पोषविष्टरः प्रसृत आसीत्, परितस्तं पट्टकौशेयकोशभूषितानि सुरभिद्रवभावितानि सुरभीणि उपबर्हगेन्दुकानि लग्नान्यासन् । मध्ये मन्त्रिमहोदयः पाटलिकुसुमकर्णिकापटलमध्युषितकन्दुकानुकारो लुठद्गात्र आसीत् तन्मणिबन्धौ मल्लिकामालतीप्रसूनगुम्फवलयितावभूताम् । मध्येकक्ष च रमणीय उत्फलतन्त्रीकः कोच आसीत् । वर्तुलमञ्चकुसुमस्तबकालङ्कृता कुसुमतसनी बभूव । भित्तिलग्नेषु चित्रेषु प्रायेण द्वीपान्तरीयप्राकृतिकदृश्यचित्राण्यभूवन् अग्न्याधानिकोपरिष्टात स्थापितमेक पात्रं भारतीयं चित्रमासीत् यत्र श्री नेहरू पण्डितस्य प्रतिकृतिरासीत् ।

"मन्त्री पप्रच्छ—कथय कुतोऽयमागमनायासः कृत ··· ?"

"भवत्समागमायागतास्मि ·" इति सस्मितं मयोक्तः स पर्यङ्क उत्थायोपविष्टः – "अहो कीदृङ्मधुर त्वावरायासि (हाउ स्वीट यू आर ?)"

अथैकां मालयभाण्डिकामुद्घाट्य सुरापात्रीं चानीतवान् स्थापिकायां स्वास्तीर्णायां सस्थाप्योवाच– 'दयस्व, आवां जीवनशुच क्षणाय · ·।"

"अहं समया तमुपातिष्ठे, सर्वथा तेन संगता द्विजनोपस्थेये कोचे ।"

"स मां बाहुभ्यामाममर्द, सुरा मयोद्धृता, ततश्च चषकाच्चषकाम्, अधरेण योजयन् सस्मित धयितुं प्रचक्रमे ।"

अहमपृच्छम्—"दयित ! भवन्तमपि जीवनशुच. परिभवन्ति ?"

"ह्वाई नाट् डार्लिङ्ग ··· (कथ न प्रिये) ? न जीवनं चिन्ताशोकविना कृतम्, सर्वोऽपि जनश्चिन्ता शोक-पाश-पाशित, ·।"

"ओ नो यू आर रांग··। (ओ ! मैवम्!) अतथ्यं वदति भवान् ·· !

लाइफ् इज् फुल ऑफ जॉय ऐंड चियर्नेस् चार्म डियर् · फार यू ·! (जीवनं सुखानुभवेनानन्देन च भवत्कृते परिपूर्णमस्ति ·· कान्त · !)

"नो नो डार्लिग् · ! (नो नो प्रिये · !) स मदविह्वलाङ्गोऽवदत्—"अस्माकमपि शोको

ऽस्ति, अधिक सन्ताप प्राकृतजनात्, अहं प्रत्येकस्य जनस्यापेक्षयाधिकसंतप्तोऽस्मि। न त्व वेत्थ भावी प्रत्येकोऽपि दिवसो मम दृक्पथं वमत्वेनाव, तरति। न जाने को मे शिरस्युद्वमेत्, येन मे पदच्युतिर्भवेत् न वेद्मि कतम आवमेत, येन निर्वाचने पराजितः स्याम्। न जाने कतमो विष वमेत् यन्मे कृष्णकृतीनामुद्घटन भवेत्। अस्माकं प्रचुरा शोकाः सन्ति प्रेयसि · ·! वयम् प्रकाशमव हसामः, अन्तस्तु प्रतिक्षण रुदिम ।"

"तदैतत्सर्वञ्जहासि कुतो न कामिन् · ·? यदात्र शोकसन्तापयोरेव प्रचितिः मुञ्चसि कथं न ?"

"हाउ सिली यू आर स्वीट् ? ( कियन्मुग्धासि मधु मधुरे · · ·।) —स आह "भणसि मुञ्चास्येतत्? अयि ! पृच्छ माम्—नित्य प्रभात उत्थाय पश्याम्यात्मन आसन्दीम् अस्ति सा यथावस्थिता—केनाप्यपहृता वा ·? जानासि सार्धसहस्रद्वयम्, सहस्रत्रयं वा कार्षापणानां लभ एव प्रतिमासम्. इतोऽतिरिक्तं कियन्मितं लभे · ?"

"सर्वं विजानामि प्रेमिक ·!" मयोक्तम्—"भवत एकः पुत्रः उत्तरकुरुषु यन्त्रकलायां विशेषप्रशिक्षणं प्राप्तुं गतोऽस्ति, यद्यपि सोऽवर श्रेण्यामेव परीक्षायामुत्तीर्ण आसीत्, अन्यस्य वाक्साहाय्येन स तत्प्रशिक्षणे लब्धप्रवेशः, तस्य कृतेऽर्थव्ययभारश्च लक्षमुद्राणां प्रत्यब्द भवतो ह्रियते · ।"

यस् स्वीट् ! (एवं सुन्दरि !)"

एकस्य पुत्रस्य च नाम्ना भवता दश सवाक्सनिमाः सञ्चाल्यन्त एतस्मिन् प्रदेशे ।"

"कुतो न प्रेमिके !

"एकस्याः कन्यायां नाम्ना निर्माणव्यापारशालैका च परिचालितास्ते · · ·।"

"यस् यस् दैट् इज् आल्सो।" ( आम् आम् तदपि विशेषः)"

"मद्यनिषेधे सर्वाधिकं व्याख्यानानि भवतो भवन्ति, मद्यसेवनं पापमिति वदतां भवान् सर्वाग्रणी ।"

"ह्वाई नाट्,ह्वाई नाट्" (कथं न? कथं न?)

"सुरापान–भ्राष्ट्रिका अपि सर्वतोऽधिका भवतैव सन्दीप्यन्ते ! सुरा-विक्रयाधिकारपत्राण्यपि सर्वतोऽधिकं भवानेव वितरति। चौर्येण सुराविक्रय व्यापारे गढलाभमपि च भवानेव करोति।

"बट् · · दैट् इज् प्रायवेट् जॉब · · डार्लिंग! ह्वाई आर यू क्रिटीसाइजिंग मी · ·?" ( तत् किम्, अय तु मे वैयक्तिको व्यवसाय, तत् किं मामालोचसे · ? प्रिये !"

"बट् आई एम् योर् इन्डिविजुअल् फन् डियर ·? तदेतत्–यदहमस्मि भवतो वैयक्तिकपरिहास वाक्, · प्रेयः !)"

"ओ दैन् राइट् · (ओ! तत् सुन्दरम् ·)"

"अस्तु कामिनि ! पर्याप्तपीतोऽस्मि साम्प्रतम्। अथायातु तावन्मया सह · ·।"

"क्व ! क्वचिद् व्यवसायाद्युपप्रवर्तनाय निमन्त्रितेन गन्तव्यम् · ? प्रिय · ·!"

"पश्य कामिनि! अहं गृहात् केवलं व्यवसायसंप्रवर्तनाय वा, राजसभां गन्तुं वा चरणन्यासं करोमि, न तृतीयकार्याय · ।"

"मयाऽपि सार्धं न गमिष्यसि ?

"ओ नो · ·? नाहं कयापि बालया सह गृहान्निष्क्रामामि अपितु प्रत्येकां बालां स्वशयनकक्षमेवानाययामि · ·," स्वतनुजामपि · ·?"

"ह्वाट् · ? यू आर फूल्। शेम्-शेम् · ·।"

"स विह्वलन् व्याहृतवान्–त्वां विहाय सर्वेषाम् ।य स्व कार्य सिषाधयिषु, यः स्वेष्टिकाभाण्ड कृते कोकिलप्रेप्सुः कोकिलप्राप्त्यनुमतिं जिघृक्षुः. यः स्ववेतनवृद्धिं, स्वपदवृद्धिं वा चिकारयिषुः, यो राज-भूति लिप्सुः यः स्वमभिनव

वाणिज्यादिव्यवसायमुन्निनीषु, तेषां सर्वेषां तरुण-कन्या, तेषां सर्वेषां वराङ्गना वा । यद्वा तेषां सर्वेषां तरुणभगिन्यः । ह: ३ह: ३ ह: ३ ।"

"एव चासौ वैरूप्येणापतत् स तारस्वनं चीत्कृत्याहं च हसितुमुपक्रान्तवान् ।"

अकस्माच्चकम्पे हृदयम् । चिकित्सालयप्राप्तेः पूर्वमेव मया सह प्रतस्थे ।

(पुनर्मुद्रणाधिकारः स्वायत्तो कृतो लेखकेन)

---

ओ३म्

# श्रीगुरुपादोदकम्

जगन्नाथ शास्त्री अध्यापक –स हि विभाग, डी ए वी हायर सिकण्डरी स्कूल श्रीनगर, काश्मीर

( १ )

दयानन्दाम्बोधेः समुदितवती ज्ञानलहरी,
प्रविष्टा वेदात्मप्रमदविपिने सिञ्चनपरा ।
प्रतिष्ठां सयाता विरजगुरुपादोदकरसैः,
विकासं सप्राप्ताभिनवशिवसंकल्पचयनात् ॥

( २ )

स्मारं स्मारं गुणगणनिधिं ज्ञानविज्ञानमूर्तिं,
ध्यायं ध्यायं शमदमपरं ध्वान्तपाखण्डभानुम् ।
पायं पायं गुरुवरदयानन्दपादोदकं यौ,
श्रद्धाहंसौ परहितपरौ ज्ञानमार्गे कृतार्थौ ॥

( ३ )

सोऽयं महावैदिकधर्मगोप्ता,
स्वातन्त्र्यराज्यस्य महाविभूतिः ।
विद्यावतारो गुरुदेववर्य–
श्चकार सत्यार्थमहाप्रदीपम् ॥

( ४ )

सुकुमारमतीञ्छिष्यान्प्रबोधयितुमञ्जसा ।
चकाराभिनवं शास्त्रं वेदभाष्यं दयानिधि ॥

( ५ )

अहोभाग्यमहोभाग्यं गुरुकुलनिवासिनाम् ।
यदनुग्रहेण संप्राप्तो गुरुशिष्यसमागमः ॥

( ६ )

दयानन्दांघ्रिपद्मस्य मधुपो मधुपः सदा ।
शारदाचरणभक्तिं जगन्नाथो लभेत ताम् ॥



# राजा अम्बरीषः

इन्दुकुमार–रायः, श्रीअरविन्दाश्रमः–पांडिचेरी

पुरा किल अम्बरीष इति विश्रुत कश्चन नरपतिरासीत् । भगवति वासुदेवे, तद्भक्तेषु, साधुषु च अतीव भक्तिपरायण स राजा । सागरमेखला मही शासत्, प्रजाश्च नयधर्मेण पालयन् स सुखेन जीवितमयापयत् ।

एकदा स नृपतिर्गुरोर्वसिष्ठस्याश्रम प्रपेदे । तत्रासौ ऋषिमभिवन्द्य प्रच्छ – 'मुकुन्दो मयि प्रसन्नो भवेत् इत्येतदर्थं मया कि करणीयमिति उपदिशतु भवान् ।'

नृपतेरनामय पृच्छता गुरुणोक्तम् – 'विष्णोप्रसादप्राप्त्यै द्वादशीव्रतमाचर । निर्व्याजमाचरिते व्रते त्वयि प्रसन्नमना भगवानात्मानमपि दद्यात् ।'

गृहं प्रत्यावृत्य गुरोरनुज्ञया राजा संवत्सर द्वादशीव्रतं दधार । व्रतावसाने त्रिरात्रमुपोषित सन् ब्राह्मणेभ्यो गोदानं कृत्वा तांश्च भोजयित्वा यदा स्वय पारणां कर्तुमुपाक्रमद् तदा सुलभकोपः महर्षि. दुर्वासाः राज्ञः विष्णुभक्ति परीक्षितु तत्राससाद । मुनेरागमनादात्मानं नितरा सौभाग्यवन्त मन्यमानो राजा प्रार्थयत–'कालिन्दीतटिन्यां स्नानादिकर्म सम्पाद्य पारणासमयं नातिक्रम्य आगम्यतां यतो मे व्रतनिर्वहणं सुष्ठु भवेत् भवत्प्रसादादिति ।

अथ यमुनाकूलं गतो ध्याननिरतो मुनिश्चिरयति स्म । द्वादशीतिथेरतिक्रान्तिर्न भवेदिति चिन्ता समजनि पारणव्यग्रमनसि राज्ञि । 'एकतः व्रतभंगः अपरतस्तापसातिक्रमणम् । हे कृष्ण ! ईदृशि उभयसकटे त्वमेव शरणमिति प्रार्थयामास राजा ।

अथ सचिवैः शास्त्रविद्भिश्च उपदिष्टो राजा तिथ्यतिक्रमणं न विधेयमिति । केवलमम्भसा पारणायां सम्पन्नायाम् अनशनं न लंघ्येत मुनेरामन्त्रणविषये सदाचारोऽपि न अतिक्राम्येत । राज्ञा तथैव कृतम् ।

प्रत्यागत्यमुनिर्ज्ञानचक्षुषा सर्वमवगम्य ममावहेलन कृतमिति मत्वा भृश चुकोप । 'धर्मलघनाद् दण्डनीयोऽसि' इत्युक्त्वा तेन स्वीया विकटा जटा भूमौ ताडिता । सपदि काचित् भीषणा कराला राक्षसी प्रादुरभूत् पदभारान्मेदिनीं कम्पयन्तीव, 'अभ्यधावच्च राजान मुनेराज्ञया ।' भगवान् स्वय मा रक्षत् रक्षणार्हश्चेदहम् इति विश्वस्य राजा निश्चलस्तस्थौ ।पद ात् पदमपि न चचाल ।

नृपतेर्भक्त्यतिशयेन प्रीतो भक्तवत्सलो हरि प्राहिणोत् सुदर्शनचक्रं भक्तरक्षणाय । राक्षसी हत्वा विष्णुचक्र मुनिमन्वधावत् । आश्रयप्रार्थी मुनीन्द्रो भुवनत्रय बभ्राम पर कुत्रापि आश्रयमलब्ध्वा ब्रह्मलोकमुपेत्य तेन ब्रह्मा स्तुतः आश्रयश्च प्रार्थितः । ब्रह्मणापि प्रत्याख्यातो मुनिर्जगतां क्षेमकर शंकर शरण जगाम । तत्रापि स प्रत्याख्यात उपदिष्टश्च हरि गन्तुम् । विष्णुलोक प्राप्य मुनिर्हरिमस्तौत् । विष्णुनोक्तम्–'मुने, भक्तपराधीनोऽहमस्मि । मद्भक्तविरोधः कदापि न करणीयः । राजानमम्बरीष गत्वा शरण याचस्व । करुणानिधी राजा त्वाम् रक्षेत् ।'

अथ मुनिवरो राजानं शरण प्रपेदे । कृपापरवशो लज्जितश्च राजा सुदर्शनचक्र प्रार्थयामास मुनिपीडापरिहराय । चक्रमशाम्यत ।

ततो राजा मुनेश्चरणोदकं प्रतिगृह्य प्रसादानन्तरं स्वयं भुक्तवान् । मुनिश्च राजानमाशीर्भिरलंकृत्य ब्रह्मलोक न्यवर्तत ।

अहो भक्तवत्सलो हरिः । अहो हरिभक्तानामुदारता ।

पूर्वतोऽनुवृत्त —

# मैत्रायणीसंहितोक्तसूक्तिसंग्रहः

श्री प० विद्यानिधि शास्त्री व्याकरणाचार्य

१६९. मनुष्याणां देवहितमशनम्—

सायं प्रातर्वै मनुष्याणां देवहितमशनम् ।

१७०. गवां मनुष्याणां चाशनक्रियाभेदः—

अदन्तीति वै गा आहु । अश्नन्तीति मनुष्यान् ।

१७१ असमयपरिहासनिषेधः—

यदनृतु स्मयेत तेजोऽस्य परापातुकं स्यात् । तस्मान्नानृतु स्मेतव्यम् । तेजसोऽपरापाताय ।

१७२. यज्ञेनैव मनुष्यजन्मलाभः—

अजातो वै पुरुषः । स वै यज्ञेनैव जायते ।। अजातः गृहीतजन्माप्यगृहीतजन्मेत्यर्थः ।

१७३. क्षुधः पापरूपत्वम्—

पाप्मा क्षुद् भ्रातृव्यः पुरुषस्य ।। भ्रातृव्यः शत्रुः ।

१७४. नाभेरूर्ध्वभागस्य मेध्यत्वम्—

ऊर्ध्वं वै पुरुषस्य नाभेर्मेध्यम् । अवाचीनममेध्यं । मेध्यं पवित्रम् ।

१७५. दीक्षितस्यान्नमनाद्यम्—

तस्माद् दीक्षितस्यान्नमनाद्यम् । आर्त इव ह्येष बद्धः । तस्माद् बद्धस्यान्नमनाद्यम् । यथा वै इह गरगीरेवं वै एषोऽमुष्मिंल्लोके यो दीक्षितस्यान्नमत्ति । त्रेधा वै एतस्य पाप्मानं विभजन्ते यो दीक्षते । योऽस्यान्नमत्ति स तृतीयं, योऽस्याश्लीलं कीर्तयति स तृतीय, या एनं पिपीलिका दशन्ति तास्तृतीयम् । तस्माद् दीक्षितवासोऽभर्तव्यम् । अत्र हि ताः पिपीलिका या एनं दशन्ति ।।

गरगीः विषभक्षी । वासः वस्त्रम् । अभर्तव्यमपरिधानीयम् ।

१७६. अयजुषा कण्डूयने दोषः—

यजुषा कण्डूयते । पामभविष्णव. प्रजाः स्युर्यदयजुषा कण्डूयेत।। पामंभविष्णवः पामरोगाविष्टाः।

१७७. उत्तानशयननिषेधः—

नोत्तानः शयीत । यदुत्तानः शयीतेमे लोका ययुः ।। ययेयु विचलेयु ।

१७८. अमावास्यापूर्णमासयोर्हविषो देवता—

अग्नीषोमीयं पूर्णमासे हविरस्ति । ऐन्द्राग्नममावास्यायाम् ।। अग्नीषोमौ पूर्णमासस्य देवते। इन्द्राग्नी चामावास्यायाः ।

१७९. अध्वरशब्दनिर्वचनम्—

तेऽध्वृतोऽयमभूदित्यपाक्रामन् । तदध्वरस्याध्वरत्वम् ।। ते असुराः । अध्वृतः अहिंसितः ।

१८०. अनृतशब्दनिर्वचनम्—

तेऽब्रुवन् अन्वृतीयामहे इति। तामन्वार्तीयन्त। तदनृतस्य जन्म । तद् य एवं विद्वान् सत्यानृतां वाच वदति न हैनं द्रुणाति ।। ते देवाः । अन्वृतीयामहे अनुसरामः । द्रुणाति हिनस्ति ।

१८१. संगीतप्रशंसा—

गाथां देवा अगायन् । ब्रह्मगन्धर्वा अवदन् । तस्माद् विवाहे गाथा गीयते। तस्माद् गायन् स्त्रियाः प्रियः ।।

१८२. सोमक्रयण्या गोर्वाग्रूपत्वम्—

वाग् वै सोमक्रयणी ।।

१८३. मानवी प्रजा संवत्सरे वाचं वदति—

तस्मात् प्रजा मानवीः संवत्सरे वाचं वदन्ति।

१८४. अपरिमितं जीवनम्—

अपरिमितं वै जीवनम्। यत् परिमित गृह्णीयात् परिमितं जीवनं स्यात् ॥

१८५. सर्वदेवत्यं वासः—

सर्वदेवत्यं वै वासः। यत् क्षौममुपनह्यति सर्वाभि र्वा एतद् देवताभिर्यज्ञाद् रक्षांस्यपहन्ति। अथो सर्वाभिरेव देवताभिर्यज्ञं समर्धयति ॥

१८६ अनस्थिकाद् रेतसोऽस्थिमन्तो गर्भाः—

तस्मादनस्थकाद् रेतसोऽस्थन्वन्त पशव प्रजायन्ते ॥

१८७. वत्सो जातः स्तनमिच्छति—

स्तनं कुमार इच्छति ॥ स्वाभाविकमेतत्पशूनां पुरुषाणां च।

१८८. चित्-मना-धीनां निर्वचनम्—

यद् वाव चिकित्सते इत्थमसद् इत्थमसदिति तदस्याश्चित्त्वम्। यद्धि मनसा मन्यते यन्मनसाभिगच्छति तद्वाचा वदति। यद्वाव ध्यायति इत्थमसद् इत्थमसदिति तदस्या धीत्वम् ॥ अस्याः गोः। विदादयः शब्दा गौण्या वृत्या प्रकृते गां बोधयन्ति।

१८९. षड् अहानि वाग् विभज्यते—

षड् वै अहानि वाग् विभज्यते। न वै षष्ठमहर्वागतिवदति। सर्वा वै षष्ठेऽहन् वागाप्यते ॥ कोऽस्याभिप्राय इति देवा ज्ञातुमर्हन्ति।

१९०. त्वष्टा गर्भस्थरूपाणां विकर्ता—

त्वष्टा हि रूपाणि विकरोति ॥ त्वष्टा रूपाणि पिंशतु इति ऋग्वेदेप्याम्नानात्। (ऋ. १०, १८४, १) कोऽसौ त्वष्टेति बहुभक्तिवादीनि ब्राह्मणान्यपि नालं व्याकर्तुम्।

१९१. सपाद्धि प्रजोत्पत्तिः—

सपाद्धि प्रजाः प्रजायन्ते। सपः खलु वर्णव्युत्क्रमेण पसः। स एव शेपः पुरुषलिङ्गम्। पसः सपते स्पृशतिकर्मणः इति यास्कीय निरुक्तम्।

१९२. आदित्यपथप्रशंसा—

एष वै अपरिपर. पन्था अरक्षस्यो येनासौ आदित्य एति। अपरिपरः शत्रुरहितः। अरक्षस्यः रक्षसां हनन.। रक्षोभ्यो हितो न भवतीति वा।

१९३. अजाशब्दनिर्वचनम्—

छन्दांसि सोममाहरन्। तत् सोमं न आजामिति वाव अजा ॥ आजाम् इति न विज्ञायते कस्य धातोः क्रियापदं किमर्थकं चेति।

१९४. भूद्योरहितोन्तरिक्षे तिष्ठति—

अन्तरिक्षदेवत्यो वै एष एतर्हि। प्रच्युत इत, अप्राप्तोऽमुत्र ॥ इतः पृथिव्याः। अमुत्र दिवि।

१९५. गिरावोषधीनां फलानि शीर्षाहार्याणि—

तस्माद् गिरावोषधयः शीर्षाहार्यं फलं पच्यन्ते। नत्वनो वाह्यम् ॥ शीर्ष्णा आहर्तुं योग्य शीर्षाहार्यम्। अनसा शकटेन वाह्यमनोवाह्यम्।

१९६. गृहस्थकार्ये पत्न्याः प्राधान्यम्—

पत्नी वै पारेणह्यस्येशे। पत्न्यैव रातमनुमत क्रियते। पारेणह्यस्य परिच्छदस्य। ईशे ईष्टे। रातं दत्तम्।

१९७. अश्ववालानां प्रजापतिपक्ष्मरूपत्वम्—

प्रजापते वैं एतानि पक्ष्माणि यदश्ववाराः। प्राजापत्योऽश्वः। तस्मादाश्ववारः प्रस्तर ॥ प्रस्तरः संस्तरः।

१९८. असुरपुरत्रयभेदनम् (त्रिपुरदाहो वा)—

असुराणां वै एषु लोकेषु पुर आसन्। अयस्मयी अस्मिँल्लोके। रजतान्तरिक्षे। हरिणी दिवि। ते देवा एतामिषुं समस्कुर्वन्। अग्निं शृङ्गम्। सोमं शल्यम्। विष्णुं कुल्मलम्। ते ऽब्रुवन् क इमामिषुमवस्रक्ष्यतीति। तां वै रुद्रो व्यसृजत्। एष हि देवानां क्रूरतमः।

तयेमाः पुरोऽभिनत् ॥

१९९. आर्तस्य भैषज्यम्—

सर्वो हि तान्त भिषज्यति ॥ तान्तं क्लान्तमार्तमित्यर्थः ।

२००. त्रिविक्रमो वामनो विष्णुः—

विष्णुं वै देवा आनयन् वामनं कृत्वा । यावद्यं त्रिविक्रमते तदस्माकमिति ॥

२०१. अग्नेर्देवयजनत्वम्—

अग्निर्वाव देवयजनम् । तद् य एवं विद्वान् यत्रैव क्व चाग्निमाधाय यजते देवयजन एव यजते ॥

२०२ स्कन्नहविषा द्वितीयाशीरवरोधः—

किमु स यज्ञेन यजेत यो हविषा स्कन्नेन द्वितीयामाशिषमवरुध न विद्यात् । स्कन्नेन शुष्केण स्खलितेनेत्यर्थ । आशिषमाशाम् । अवरुधम् अवरोद्धुम् । तुमर्थे कमुल् । अव्ययमिदम् ।

२०३. अपरः पूर्वस्य स्थानमारोहति—

तस्मात् पूर्वस्या जनताया अपरा जनता क्षेत्रमभ्यारोहुका ॥

२०४. अन्नस्योर्जश्च मिथः सम्बन्धः—

नह्यन्नमृते ऊर्जो धिनोति । नो ह्यूर्गृतेऽन्नाद् धिनोति ॥ ऊर्जः ऋते बलं विना । धिनोति प्रीणयति । ऊर्क् बलम् ।

२०५. मित्रावरुणयोः प्रशंसापरोऽर्थवादः—

मित्रावरुणौ वै देवानां धर्मधारयौ ॥

२०६. अन्तरिक्षस्यानिरुक्तत्वम्—

निरुक्ता हि द्यौः । निरुक्ता हीयम् । अनिरुक्तमिव ह्यन्तरिक्षम् । अर्धं ह्यन्तरिक्षस्यास्मिंल्लोके, अर्धममुष्मिन् ॥

२०७. राजैश्वर्य प्रशंसा—

यस्य वै मनुष्यराजो गृहमागच्छति तस्य वै तर्हि तदैश्वर्यं । यदा वै स ततः प्लायतेऽथ तेषां तत् पुनर्भवति ॥ तद् गृहम् ।

२०८. देवपितृकार्ये विधिभेदः—

नमस्कारो देवानाम् । स्वधाकारः पितॄणाम् ।

२०९ दीक्षितस्य सर्वमित्रत्वम्—

सर्वस्य वै एष मित्रं यो दीक्षितः ॥

२१०. घृतस्य देवमधुत्वम्—

एतद्वै देवानां मधु यद् घृतम् ॥

२११. उपरस्याविष्करणनिषेधः—

नोपरस्यावि कर्तवै । यदुपरस्याविष्कुर्याद् रथेष्ठा (गर्तेष्ठाः) स्यात् प्रमायुको यजमानः॥ निखन्यमानकाष्ठस्य तष्टोऽधस्ताद्भाग उपरः । आविः कर्तवै प्रकाशी कर्तव्यम् । प्रमायुकः मरणशीलः ।

२१२. वनस्पतीनां वायु र्गोपायिता—

वायुगोपा वै वनस्पतयः ॥

२१३. अग्निहोत्रधूमेन स्वर्गलोकजयः—

यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन लोकं जयति ॥

२१४. पशूनां दैवी विट्त्वम्—

एता वै दैवीर्विशो यत् पशवः ॥

२१५. स्वाहाकारभेदभिन्ना देवाः—

पुरस्तात्स्वाहाकारा वै अन्ये देवाः । उपरिष्टात्स्वाहाकारा अन्ये ॥

२१६. प्लक्षशब्दनिर्वचनम्—

तस्य मेधं प्लाक्षारयन् । स प्लक्षोऽभवत् । तत् प्लक्षस्य प्लक्षत्वम्

२१७. ऋक्सामयोरर्थवादः—

ऋक्सामे वै इन्द्रस्य हरी ॥

२१८. मित्रावरुणयोः प्राणापानरूपत्वम्--
प्राणापानौ वै मित्रावरुणौ ॥

२१९. दीर्घजिह्वया देवहविषोऽवलेहः--
दीर्घजिह्वी वै देवानां प्रातः सवनमवालेट् ॥
दीर्घजिह्वी सरमा देवशुनी वागित्यर्थः । अवालेट् अवलीढवती ।

२२०. सोमस्यान्नरूपत्वम्--
अन्नं वै सोमः ॥

२२१. वैश्वानराग्नेः संवत्सररूपत्वम्--
संवत्सरो वै अग्निर्वैश्वानरः ॥

—(क्रमशः)

---

# भारतमहादीपकः—भूसुरो दयानन्दः

प्रशस्यमित्र, टोपीवाला, कानपुरः

(१)

स्वाधीनताऽभ्यधिगमाय महानिनादम्,
योऽसौ चकार परमं बुधसवरेण्यः ।
येनात्र वैदिकमतञ्च सनातनं वै,
लोके भृशं प्रचरितञ्च समुद्धृतं च ॥

(२)

पाखण्डदम्भछलछद्मयुता मनुष्याः,
सम्प्रेरिता निगमवर्त्मवृताध्वनीना ।
प्रध्वंसिता तु भुवने खलु मूर्तिपूजा,
तर्केण येन निगमस्य परैः प्रमाणैः ॥

(३)

लोकोपकारविषये विहितं हि भाष्यम्,
वेदस्य येन विविधार्थमनोज्ञपूर्णम् ।
जातास्तु नास्तिकजनाः प्रभुवादिनो हि,
यस्य प्रभावनिहितैः सततं वचोभिः ॥

(४)

संस्थापिता किल तथाऽऽर्यसमाजसंस्था,
वेदप्रचार शुचिबोधविभा यथा स्यात् ।
यस्यात्मनि प्रवहते च दयासमुद्र,
दीपावलौ दिवि गतः स दयाभिभूतिः ॥

(५)

दत्त्वा त्वहो स मनुजेभ्य इतः प्रयातः,
दीपावलौ श्रुतिमयो विमल प्रदीपः ।
वर्णी यमी च नियमी विबुधः स योगी,
दीपावलौ दिवि गतः सविहाय विश्वम् ॥

(६)

यो वेदप्रभवस्य वैदिकमतस्योद्धारकः, संयमी,
योऽभूद्वेदसुधी महामतियुतो यः कामजित्क्रोधजित् ।
यो नित्येश्वरभक्तिमान् जनहितो यश्चोपकारी स्मृतः
वन्दे तं हि यशस्विनं मुनिवरं देवं दयानन्दकम् ॥

***

# स्याद्वाद–दर्शनम्

( श्री सुभाषचन्द्रः तनेजा वेदालङ्कारः, एम ए रिसर्चफैलो—राजस्थानविश्वविद्यालयः जयपुरः )

भारतवर्ष खलु निसर्गत एव विचारप्रधानं राष्ट्र वरीवर्ति । अन्येषु देशेषु जीवनसग्रामस्तथा भीषणोऽस्ति, जीवनसमस्या एव तथा ग्रथिता. सन्ति यत् तासा समाधाने एव व्यत्येति कालः । अत आध्यात्मिकतत्वान्वेषणे नहि तत्र अधिका रुचिर्विलोक्यते । इह भारतभूमौ तावत् प्रकृत्या प्रदत्तैर्वस्तुभिः परिपूर्णजीवना जनाः स्वत एव ऐहिकचिन्तानिर्मुक्ताः सन्तः पारलौकिकचिन्तनाग्रेसरा भवन्ति । समस्तास्वपि विद्यासु दर्शनशास्त्रापरपर्यायाया अध्यात्मविद्या एव गरीयसीति सर्वेऽपि ग्रन्था अङ्गीकुर्वन्ति । मुडकोपनिषदि ब्रह्मविद्या सर्वविद्याना प्रतिष्ठा निगदितास्ति ( सर्वविद्या प्रतिष्ठा १–१ ) । गीतायां भगवता कृष्णेन दर्शनशास्त्रमेव स्वीया विभूतिरित्यङ्गीकृतम् "अध्यात्मविद्या विद्यानाम्" १०–३२ । अर्थशास्त्रेऽपि आन्वीक्षिकी विद्या सर्वविद्यानां दीपस्थानीया कथिता वर्तते । सा एव समस्तकार्याणामनुष्ठानोपायः सर्वधर्माणाञ्च आश्रयो वर्तते इति प्रतिपादितम्—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।**
**आश्रयः सर्वधर्माणां शाश्वदान्वीक्षिकी मता ॥**

प्राक्तनकालादेव दर्शनस्य महत्त्वमङ्गीक्रियते भारतवर्षे । एतस्य च प्राधान्येन भेदद्वय वर्तते, आस्तिकदर्शनम् नास्तिकदर्शनञ्चेति । आस्तिकः स वर्तते यस्य वेदेषु श्रद्धा वर्तते । आस्तिकदर्शनानि—न्यायवैशेषिकसांख्ययोगमीमांसा वेदान्ता. इति षट् सन्ति । वेदेष्वश्रद्दधाना नास्तिका निगद्यन्ते—"नास्तिको वेदनिन्दकः" मुख्यतस्त्रय वर्तते नास्तिकदर्शनम्—चार्वाकदर्शनं बौद्धदर्शनं जैनदर्शनं चेति—एतदेव तृतीयं दर्शन स्याद्वाददर्शन चापि उच्यते । अस्मिन् दर्शने स्याद्वाद इत्याख्य मूर्धन्य सिद्धान्तो वर्तते तस्मादेव कारणात् एतेन नाम्ना प्रसिद्धमिद दर्शन वर्वर्ति । यद्यपि बौद्धदर्शनादपि प्राचीनतरमेतत् दर्शन ननु, तथापि अस्य सुव्यवस्था प्रथमे वैक्रमाब्दे आरब्धा बभूव । अस्मिन् समये जैनधर्मस्य दार्शनिकाधारशिलाया. सुदृढ न्यासाय महान् प्रयासो विहित. उमास्वातिकुन्दकाचार्यसमन्तभद्रेति विख्यातै. विद्वद्वरेण्यैः ।

जैन दर्शनमते जीवः चैतन्यमयो वर्तते ज्ञानञ्च तस्य साक्षाल्लक्षणम्, तच्च ज्ञान प्रत्यक्षपरोक्षभेदेन द्विविध खलु । आत्मसापेक्षज्ञान प्रत्यक्ष आत्मेतरमिन्द्रिय–मन.—सापेक्षज्ञानञ्च परोक्षं निगद्यते । यस्य ज्ञानस्योपलब्धौ आत्मा स्वयमेव कारणभूतोऽस्ति नहि स अन्यस्य साहाय्यमपेक्षते तदेव जैनदर्शने प्रत्यक्ष, तद्विपरीतं च यस्य ज्ञानस्य प्राप्तिरिन्द्रियमनसो भवति तदेव परोक्षमित्यभिधीयते ।

मतिश्रुतभेदेन परोक्षज्ञानमपि द्विविधम् । उभयं चैतत् इन्द्रियाणा मनसश्च साहाय्येन समुत्पद्यते । अवधिः मन. पर्यायः केवलम् चेति प्रत्यक्षस्य भेदत्रय वर्तते । इन्द्रियस्य मनसश्च सम्पर्कात् समुद्भूत विषयज्ञान मतिज्ञानमुच्यते । स्मृतिः सज्ञा, चिन्ता, अभिनिबोध इति चत्वारो मतिज्ञानस्य पर्यायाः सन्ति । शब्दात् समुत्पन्नं ज्ञान श्रुतं निगद्यते, मतिपूर्वक खलु तद् भवति । मतिज्ञानं विद्यमानवस्तुनि प्रवर्तते श्रुतज्ञानञ्चातीते विद्यमाने भविष्ये इति त्रिष्वपि त्रैकालिकविषयेषु प्रवृत्तं भवति ।

प्रत्यक्षज्ञान—अवधिमनःपर्यायकेवलरूपेण त्रिविधमिति प्राक् प्रोक्तं—एतेषु दूरस्थितानां व्यवधानयुक्तपदार्थानां ज्ञानमवधिज्ञानं निगद्यते । यदा खलु जीवः द्रोहेर्ष्याप्रभृतीनां परेषां मनःप्रवृ-

त्तीनां निरोधककर्मणां क्षय करोति तदा तस्मिन् अन्येषा मन स्थविचाराणा ज्ञानस्य योग्यतागच्छति, एतदेव मन. पर्यायज्ञान वरिवर्ति । यदा च ज्ञान-स्यावरणकर्तृणा कर्मणां नितान्त क्षय· क्रियते तदाऽऽत्मा स्वीय शुद्ध सर्वज्ञरूपमधिगच्छति तदा च स्वत एव तस्मिन् सर्वज्ञतादिधर्माणामुदयो भवति । एतद्धि प्रत्यक्षस्य पारमार्थिकरूपमस्ति-यद्धि 'केवल ज्ञान' मभिधीयते । अस्याधिकारिण. सम्यक्चरितस्यानुष्ठानकर्तार. सिद्धपुरुषा एव भवन्ति ।

अस्य विवेचनस्याधार. तत्वार्थसूत्र वर्तते । पश्चादागतैः जैनाचार्यैर्भिन्नरूपेण प्रत्यक्षपरोक्ष-विभागद्वयं कृतमस्ति । सामान्यरूपेण एतद्वक्तु शक्यते यत् जैनदर्शन प्रत्यक्षम्, अनुमानं, आगम चेति प्रमाणत्रयमङ्गीकरोति । प्रत्यक्षसत्ता तु सर्वमान्या एव वर्तते ।

## स्याद्वादः

जैनदर्शनस्यायं प्रधानतमः सिद्धान्तो यत् प्रत्येकं वस्त्वनन्तधर्मयुक्त वर्तते । एतेषां समस्तानां बस्तुधर्मणां यथार्थज्ञान स एव पुरुषः कर्तुमर्हति यो हि कैवल्यज्ञान प्राप्नोति । जैनदर्शनं वस्तुनो ऽनन्तधर्मेष्वेक धर्मज्ञानं 'नय' इति कथयति 'एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः' ( न्यायावतारः २९ ), नीयते परिछिद्यते एकदेशविशिष्टोऽर्थः अनेनेति नयः ( स्याद्वादमञ्जरी १५९-पृष्ठे )

नय सिद्धान्तो जैनदर्शनस्यैको मुख्यो विषयो मन्यते । कस्यापि विषयस्य सापेक्षनिरूपणमेव नयवादनाम्ना व्यवह्रियते । वस्तूनामनन्तधर्मयुक्ततया नयाः अपि यद्यपि अगण्याः सन्ति किन्तु विवेकदृष्ट्या सामान्येन भेदद्वयं तस्य स्वीकृतमस्ति द्रव्यार्थिकनयः पर्यायार्थिकनयश्चेति । कस्यचित् वस्तुनो धर्मद्वय भवति प्रथमस्तु यत् कारणात् वस्तुनो विविधपरिणामाना मध्ये ऐक्य तिष्ठति, एतदेव द्रव्यार्थिकनयो निगद्यते । द्वितीय स धर्मो यो हि देशकाल–कारणात् कस्मिन्नपि वस्तुनि उत्पद्यते । एते विशेषा एव पर्यायार्थिकसञ्ज्ञा प्राप्नुवन्ति । प्रथमो नयस्त्रिविध, द्वितीयश्च चतुर्विध, एवं सम्पिण्डितेनोभौ नेगम–सग्रह–व्यवहार–ऋतु-शब्द-समभिरूढ-एवंभूतेतिसप्तविधौ खलु । भिन्ने भिन्ने ग्रन्थे नाम्ना समानानामपि एतेषां स्वरूपविषये विशेषो मतभेदो दृश्यते । किन्तु जैनदर्शनस्यात्र-विषयेऽभिमत यत् नानारूपिण्या· सत्ताया. अश-मात्रस्य विवेचनेनापि स्वमहत्त्व दधति दर्शनानि । तत्र च नहि परस्परं कस्यापि मतभेदस्यावकाशो वर्तते । एवञ्च जैनदर्शनस्य केनापि दर्शनेन सह न वर्तते विरोधः ।

## स्याद्वादस्यार्थः

जैनदर्शनमते तु प्रत्येकस्मात् परामर्शात् पूर्वं 'स्यात्' विशेषणमवश्यमेव संयोजनीयम् । यथा खलु घटविषये नो परामर्शेण स्यादस्ति=( कथंचित् अय विद्यते ) इति रूपेण भाव्यम् । वर्तमान-कालस्य, देशस्य च विचारेण वय घटस्य सत्तामनुभवामः किन्तु इयं सत्ता त्रैकालिकं सत्यं नास्ति किन्तु सापेक्षिकं सत्यं वर्तते, यतो हि प्रत्येकस्मिन् काले, प्रत्येकस्यां दशायां एतादृशानामन्येषां घटाना सत्ताया नानुभवः कर्तुं शक्यते । अतः घटविषये अस्माकं परामर्शः 'स्यादस्ति' इत्येव भवितुमर्हति । अत एव जैनदर्शनस्य प्रत्येकेन परामर्शवाक्येन सह 'स्याद्' पदयोगे आग्रहो वर्तते ।

## सप्तभङ्गीनयः

सामान्येन तावत् न्यायशास्त्रे अन्वयी व्यति-

रकी चेति परामर्शस्य द्विविधं रूप वर्तते किन्तु जैनन्याये परामर्शस्य रूप सप्तविधमङ्गीकृत सत्तायाः सापेक्षतया स्वीकारात्। अयमेव 'सप्तभङ्गीनय.' उच्यते—तानि रूपाणि इत्थ सन्ति—

१ स्यादस्ति ( कथचित् विद्यते )
२ स्यान्नास्ति (कथचिद् न विद्यते )
३ स्यादस्ति च नास्ति च ( कथचित् अस्ति कथचिच्च न वर्तते )
४ स्याद् अवक्तव्यम् ( कथञ्चित् वर्णनातीत विद्यते )
५ स्याद् अस्ति च अवक्तव्य च ( कथञ्चित् केनचित् प्रकारेण वा अस्ति, वर्णनातीत चास्ति )
६ स्यान्नास्ति च अवक्तव्य च ( कथञ्चित् न विद्यते वर्णनातीत चास्ति )
७ स्यादस्ति च नास्ति च अवक्तव्य च

'अत्र खलु प्रथमपरामर्शस्य अय भाव यत् कोऽपि पदार्थ· केनापि धर्मविशेषेण सह सम्बद्धो वर्तते' यथा हि स्याद् घटोऽस्ति अर्थात् अस्मिन् समये एकस्मिन् विशेषस्थाने ( गृहे ) एक विशेषरूपयुक्तो घटो विद्यते अयमर्थोऽस्य ( स्यादस्ति ) वाक्यस्य ग्राह्य ।

द्वितीयस्य वाक्यस्य प्रयोग. पदार्थविशेषस्य धर्मविशेषेण समं सम्बन्धप्रतिषेधावसरे क्रियते यथा 'स्याद् अस्मात् गृहात् बहि. घटो न विद्यते' अस्यायमभिप्रायो यत् कोऽपि विशिष्टप्रकारक घटः एकस्मात् विशिष्टगृहात् बहि· अभावं धत्ते। उभयोरपि परामर्शयो. एकत्रीकरणेन तृतीयः परामर्श उदेति यथा—'स्यात् गृहे अस्ति घट. गृहात् बहिर्नास्ति घट' इत्यस्य निर्देशस्तृतीये वाक्ये कृतोऽस्ति। अपक्वः ( कच्चा ) घट कृष्णोऽस्ति परिपक्वश्च स एव रक्तवर्णो जायते कि तर्हि घटस्य यथार्थरूप इत्यस्योत्तर न दातु शक्यते सम्यक् अत घटस्य वास्तविकरूप अवक्तव्यमनिर्वचनीय वा वर्तते। जैननये चतुर्थ परामर्शः अस्यैव सिद्धान्तस्य प्रतिपादको वर्तते। अन्तिमाना त्रयाणा परामर्शानामुत्पत्ति पूर्वोक्ताना विचार बिन्दूना सम्मिश्रणेन भवति। जैनदर्शनानुसारं कस्यापि पदार्थस्य विषये एतेषामेव विकल्पक ज्ञानानामुदयो जायते सप्तप्रकाराणां परामर्शानां धारणात् अयं नय· 'सप्तभङ्गीनय' इत्यभिधीयते।

## तत्त्वसमीक्षा

जैनदर्शनमते अनन्तधर्मात्मक खलु वस्तु 'अनन्तधर्मात्मक तत्त्वम्' वर्तते। कस्यापि मनुष्यस्य स्वरूपज्ञानाय तस्य देश, काल, जातिः, धर्म, वर्णश्चैतेषां ज्ञान विलावश्यक वर्तते एते सत्तात्मकधर्मा एव 'स्वपर्याय' नाम्नाभिधीयन्ते। किन्तु एतैः सह निषेधात्मक गुणाना ज्ञानमपि आवश्यक खलु यथा यदि देवदत्त· भारतवासी, श्यामवर्ण, हिन्दू जातीयः ब्राह्मणकुलोत्पन्नो वर्तते तर्हि स न योरुपदेशीय. नापि चीनदेशीय, नापि श्वेतवर्ण न च पीतवर्णः इति।

निषेधात्मका गुणा एव 'परपर्याय'' इत्युच्यन्ते। इत्थ जैनदर्शनस्य कल्पनाया वस्तु स्वपर्याय परपर्याययोः समुच्चय वरीवर्ति।

## द्रव्यम्

प्रत्येक वस्तु अज नित्य अनित्य नाशयुक्तं स्थिरं चापि भवति अतः उत्पादव्ययध्रौव्ययुक्तं तत् उच्यते। प्रत्येकस्य वस्तुन· सत्तायै अनिवार्याणां धर्माणां गुणाः उच्यन्ते देशकालजन्याः परिणामशालिनश्च धर्माः 'पर्याय' इति निगद्यन्ते। गुण-

पर्यायविशिष्ट वस्तु एव जैननये द्रव्य कथ्यते 'गुणपर्यायवद् द्रव्यम्' तत्त्वार्थसूत्रम्—५–३७ )। द्विविध· खलु क्रियते द्रव्यविभाग·। प्रथमः—देशव्यापि द्रव्य, द्वितीयश्च बहुप्रदेशव्यापिद्रव्य। काल एव केवलमेतादृशः पदार्थ यो हि एकप्रदेशव्यापी मन्यते। जगतोऽन्ये पदार्था बहुदेशव्यापिन. स्वीक्रियन्ते। जैनदर्शने विस्तारधारकाणि द्रव्याणि अस्तिकाया उच्यन्ते एते च अस्तिकाया पञ्च सन्ति १ जीवास्तिकाय २ पुद्गलास्तिकाय ३ आकाशास्तिकायः ४ धर्मास्तिकाय ५. अधर्मास्तिकायश्चेति ।

## जीवः

देशव्यापिना ( अस्तिकायानां ) द्रव्याणां जीव-अजीवरूपे भेदद्वय वर्तते। जीवः आत्मनो वाचको वर्तते। स च बद्धमुक्तभेदेन द्विविध·। संसारिणः जीवस्य 'तत्त्वार्थाधिगम सूत्रे ( २।३२-३६ ) नारक-मनुष्य-तिर्यक्-देवरूपेण चत्वारो भेदा· कथिताः सन्ति।

अजीवस्तावत् पुद्गल-आकाश-धर्म-अधर्मभेदेन चतुर्विधोऽभिहितोऽस्ति।

चेतनद्रव्यं 'जीव' उच्यते चैतन्यं खलु जीवस्य सामान्यलक्षण वर्तते 'चैतन्यलक्षणो जीवः' ( षड्दर्शनसमुच्चय· ४९ ) अयं जीवः एव वस्तूनि जानाति कर्माणि च सम्पादयति सुखस्य भोक्ता दुःखस्यानुभवकर्ता चास्ति नित्योऽपि परिणामशीलोऽयं वर्तते।

## अजीवः

जैनदर्शने पुद्गलशब्दस्य विलक्षणोऽर्थः क्रियते 'पुद्गलास्तिकायः' इति संज्ञा जैनशास्त्रे एव प्रसिद्धास्ति सर्वदर्शनसंग्रहे—'पूरयन्ति गलन्ति च इति पुद्गलः' इति पुद्गलस्य निरुक्ति कृतास्ति। अणुः सघातश्चेति रूपद्वयमुपलभ्यते पुद्गलस्य एतयोः उभयोरपि स्पर्शरसगन्धवर्णेति चत्वारो गुणा विद्यन्ते।

## आकाशः

जीवादीनामस्तिकायद्रव्याणा कृते अवकाश प्रयच्छति अनुमानेनैव आकाशपदार्थोऽङ्गीक्रियते। 'लोकाकाश-अलोकाकाशभेदेन द्विविधोऽयमाकाशः।

## कालः

कालस्य कल्पनापि अनुमाने एव स्थिता। ससारस्य समस्तान्यपि वस्तूनि परिणामशीलानि भवन्ति। अस्य च परिणामस्य कारणरूपे कालसत्ता स्वीक्रियते। द्रव्यसग्रहे कालस्य द्वौ भेदौ अभिहितौ—व्यावहारिक कालः—पारमार्थिक कालश्च। द्रव्याणा परिणामेनानुमितः दण्डघटीयन्त्रादिभिरवयवै· सम्पन्नः कालो व्यावहारिककालो निगद्यते। पारमार्थिककाल नित्य निरवयवश्चोच्यते। पदार्थस्थितिरेवास्य सामान्य लक्षणम्।

## धर्मः-अधर्मः च

धर्मस्य अधर्मस्य च द्रव्यस्य कल्पना नितान्तं भिन्ना अन्येभ्यो दर्शनेभ्यः। गतिशीलस्य जीवस्य पुद्गलस्य च सहकारिकारणभूतो द्रव्यविशेष एव 'धर्म' इत्युक्त.। अधर्मस्तावत् तस्मात् निरुद्धो ननु वर्तते। स्थितिशीलस्य जीवस्य, पुद्गलस्य च स्थितेः सहकारिकारणभूतः द्रव्यविशेषः 'अधर्म' इत्युच्यते।

## आचारमीमांसा

जैनदर्शने मोक्षस्य त्रीणि साधनानि स्वीकृतानि सन्ति—सम्यक्दर्शनम्, सम्यक्ज्ञानं, सम्यक्चरित्रं च। दर्शनशब्दस्यार्थ. श्रद्धास्ति। अत

मोक्षमार्गे गन्तु साधकस्य प्रथम साधन सम्यक्श्रद्धा भवेत् सैव सम्यक्दर्शन निगद्यते–'तत्वार्थश्रद्धान सम्यक् दर्शनम्' ( तत्वार्थ सूत्र १।२ ) मोक्षस्य द्वितीय साधन सम्यक् ज्ञान–शास्त्रेषु प्रतिपादिताना निखिलसिद्धान्ताना तत्वाना च यथार्थानुभवोऽपि श्रद्धावत् महत्वपूर्ण खलु । उभयोरप्येतयो सम्यक् दर्शन–सम्यक्ज्ञानयो उपयोगिता सम्यक् चरित्रे एव तिष्ठति । एतत् साधनत्रयमेव जैनदर्शने 'रत्न-त्रयं निगदित ननु' ।

## कर्म

जीवस्तु निसर्गतो मुक्त खलु किन्तु वासना-जन्यानि कर्माणि तस्य शुद्ध स्वरूपमावृण्वन्ति । एतैः कर्मभि सम्बद्ध जीव एव बद्धपुरुषरूपे दृश्यते । अष्टविधं खल्विदं कर्म वर्णित जैनदर्शनग्रन्थेषु । कानिचित् कर्माणि ज्ञानं कानिचित् च दर्शनमाच्छा-दयन्ति कानिचिच्च मोहोत्पादनसाधनानि भवन्ति ।

## सप्तपदार्थाः

अस्मिन् दर्शने सप्त पदार्था. स्वीकृता सन्ति आस्रवः, बन्धः, सवरः, निर्जरा मोक्ष, जीव, अजीवश्चेति कर्मणा प्रवेशद्वारतया योग एव आस्रव उच्यते । भावास्रवो द्रव्यास्रवश्चेति द्विविधोऽयम् ।

यदा जीवः कषाययुक्ततया कर्मयोग्यान् पुद्-गलान् गृह्णाति तदा तदेव 'बन्ध' निगद्यते । उमास्वामिमते मिथ्यात्व-अविरति-प्रमाद-कषाय–योगश्चेति पञ्च बन्धनकारणानि विद्यन्ते ।

आगमिष्यतां ( आगे आने वाले ) कर्मणां मार्गस्य सर्वथावरोध एव 'संवर' उच्यते अय हि आस्रवात् विपरीतो वर्तते । तदनन्तरं निर्जरा वर्तते या हि सम्पादितानि कार्याणि निर्वीर्याणि विधाय फलभावाय तानि जीर्णानि करोति । एतेषां फल मोक्षो वर्तते । जीवः अजीवश्च प्रागेव प्रतिपादितः ।

सिद्धावस्थायाः प्राप्ति यावत् सद्य एव पूर्ण-तया न भवति मुमुक्षूणा आध्यात्मिकविकासः सो-पानक्रमेण शनै शनैः मोक्ष प्रति याति मुमुक्षु । मोक्षमार्गस्यैतानि सोपानान्येव 'गुणस्थान' निग-द्यन्ते । जैनदर्शनमते गुणस्थानानि चतुर्दशविधानि विद्यन्ते तानि चेमानि सन्ति १ मिथ्यात्व, २ ग्रन्थिभेदः, ३ मिश्र, ४ अविरतसम्यक्दृष्टि ५ देशविरतिः, ६ प्रमत्त, ७ अप्रमत्त ८ अपूर्व-करणम् ९ अनिवृत्तिकरणम् १० सूक्ष्मसम्पराय, ११ उपशातमोह १२ क्षीणमोह, १३ सयोग-केवलम् १४ अयोगकेवलम् चेति शनै. शनैः एतानि क्रमेण पारयन् अन्तिमदशायामुद्गच्छति साधक । लोकाकाशालोकाकाशमध्ये एक नितान्त पवित्र स्थानमस्ति एतदेव निवासभूमिरस्ति सिद्धा-नाम् । इय भूमिः सिद्धशिला उच्यते ।

## सम्यक्चरित्रम्

अस्य सिद्धयै पञ्च महाव्रतानां पालनं नितान्त-मनिवार्य वर्तते । एतानि च अहिंसा, सत्यम् अस्ते-यम्, ब्रह्मचर्य, अपरिग्रहश्चेति सन्ति ।

अय सारः यत् जैनदर्शनं अस्य जगतः मूले अनेक तत्वाना सत्तां स्वीकरोति । अतः तत् दर्शनं बहुत्ववादस्य समर्थक प्रतिभाति । एतद्धि अस्माक बाह्येन्द्रियै अन्तरिन्द्रियैश्च अनुभूतस्य जगतः वास्तविकीं सत्ता स्वीकरोति ।

अनेकान्तवाद जैनदर्शनस्य बहुमूल्य प्रशंस-नीयश्च सिद्धान्तोऽस्ति । गुणरत्नेन एकं प्राचीन-श्लोकमुद्धृत्य अस्य सिद्धान्तस्य पुष्टिःकृता ।

**एको भावः सर्वथा येन दृष्ट.**
**सर्वे भावाः सर्वथा तेन दृष्टाः**
**सर्वे भावाः सर्वथा येन दृष्टाः**
**एको भावः सर्वथा तेन दृष्टः ।**

नानात्मकसत्ताया आलोचना स्याद्वादमन्तरा न संभवति । किन्तु अयं सिद्धान्तो यद्यपि जैन-

शेषः २१३ तमे पृष्ठे

# श्री ब्रह्मणस्पतेर्वेदपादस्तवः

श्री साम्ब दीक्षित दामोदर उपाध्याय, गोकर्ण

( १ )

सिद्धिबुद्धिप्रेमपात्र सेनानीसहज प्रभो ।
त्वद्भक्तं मां कविश्रेष्ठ कृणुहि ब्रह्मणस्पते ।
(१।१८।१-२)

( २ )

करोतु भगवान्देवो विकटास्यो महामनाः ।
भजतां मंगलंनित्यं वसुवित्पुष्टिवर्धनः ।।
(१।१८।२-२)

( ३ )

संसारार्णवमग्नानां तारणाय जगत्पते ।
नमामो मनसा भक्त्या रक्षाणो ब्रह्मणस्पते ।।
(१।१८।३-३)

( ४ )

तं नमामि गणेशानं येनेदं भुवनं धृतं ।
यं नत्वा सिद्धिमाप्नोति यो रेवान्यो अमीवहा।।
(१-१८-२-१)

( ५ )

वृत्रं हत्वा जगन्मृत्युं लोकमङ्गलकारणः ।
यस्तं वंदे देवेदेवं सनिं मेधामयासिषं ।।
(१-१८-६-३), (य ३२-१३-३-३)

( ६ )

तमेव मन्महे मुदा यमामनन्ति सिद्धिदं ।
समस्तकार्यसंचयं यस्मादृते न सिद्ध्यति ।।
(१-१७-७-१)

( ७ )

योनन्यमनसा त्वां वै गणेशानमुपासते ।
सदैव भक्तियुक्तेन स धीनां योगमिन्वति ।।
(१-१८-७-३)

( ८ )

भक्तियुक्तेन मनसा ब्रह्मणस्पतिप्रीतये ।
क्रियमाणं यं च कं च देवा यज्ञं नयंतु नः ।।
(१-४०-३-४)

( ९ )

मंत्राणां ब्रह्मसंज्ञाहि ब्रह्म ब्रह्मेति गीयते ।
तेषामधिपतित्वाच्च प्रनून ब्रह्मणस्पति. ।।
(१-४०-५-१)

(१०)

त्वं रुद्रो जगतां दृतौ महान्,
त्वं विष्णुर्भुवनावने मतः ।
त्रैलोक्यस्य च सर्जने पुरा,
त्व ब्रह्मा रयिविद्ब्रह्मणस्पते ।।
( २-१-३-३ )

( ११ )

गणेश तनुवृक्षे ते दृढ रक्षतु मे मन ।
अनंतफलदानेन वेर्न वेवीयते मतिः ।।
( १०-३३-२-४)

( १२ )

कामक्रोधौ लोभमोहौ मात्सर्यं मद एव च,
यतोऽरयः प्रबाधंते ततो नो अभयं कृधि ।।
(८-६१-१३-२)

( १३ )

रविं महापापतमो निवारणे,
छविं शशांकारुणयोर्मनोहरं ।
भवाम्बुधेः पारकरं नमाम्यहं,
कविं कवीनामुपमश्रवस्तमं ।।
(२-१३-१-२)

( १४ )

बृहद्रणे दैत्यपतिर्विनाशितः
त्रिविष्टपे देववराः प्रतिष्ठिताः ।
महाभयाद्भक्तजना हि तारिताः,
बृहस्पते महि तत्ते महित्वनम् ।।
(२-२३-४-४)

( १५ )

तं प्रमातुं केन नरेण शक्यते,
तस्य कष्टादंहसश्चैव नो भयं ।
तेन दूरादेव रिपुर्निपात्यते,
यं सुगोपा रक्षसि ब्रह्मणस्पते ॥
(२-२३-५-४)

( १६ )

यया सर्वमिदं विश्व वशेगृह्णाति बुद्धिमान् ।
तां बुद्धिमनिशं दत्वा तया नो मृड जीवसे ॥
(य. रुद्रसू. अनु. १० मं २ पाद-४)

( १७ )

संसारघोरार्णवमध्यगं तं,
लोभाख्य नक्रं बलिनं महांतं ।
त्वं संहरादौ जितकामदेव
मृगं न भीममुपहत्नुमुग्रम् ॥
(२-३३-११-१)

( १८ )

गणेशान कृपालो त्वमगतीनां गतिर्भव ।
यजनार्थं हव्यवाहमग्निं मंथाम पूर्वथा ॥
(३-३८-१-४)

( १९ )

नमो भवाब्धितारिणे समस्तपापहारिणे,
निरस्ततापजालिने परास्तपूर्वदेव ते ।
नमः सुवर्ण चक्षुषे नमः सुवर्ण हस्तिने
नमोऽस्तु तुंदिलाय ते नमो हिरण्यबाहवे ॥
( य रुद्र सू अनु. २ पा-१)

( २० )

त्वमेव भूतनिवहं करोषि वै,
त्वमेव पासि विनिहंसि विघ्नहन् ।
प्रजापति विधिशिवौ त्वमेव हि,
तव व्रताय मतिभिर्जरामहे ॥
(२-२३-६-३)

( २१ )

दिव्यतरिक्षभूमिभ्यो वातवर्षान्नरूपिणः ।
उत्पद्यते भयं यन्मां पवमान वितज्जहि ॥
(९-६७-२१-३)

( २२ )

कायेन वाचा मनसा यानि पापानि कुर्महे ।
अग्निर्यथेधन तद्वद् यः पोता स पुनातु नः ।
(९-६७-२२-३)

( २३ )

देवेन वै नीयते लोकजालं,
देवेन चाचर्यते सर्वकर्म ।
देव विनैकोपि तृणं न कपते,
बृहस्पते देवनिदो निबर्हय ॥
(२-२३-८-३)

( २४ )

भक्तानामनुरक्तानां भजतां नमतां तव ।
सर्वाण्यभद्राणि हरन् यद्भद्रं तन्न आसुव ॥
(५-८२-५-३)

( २५ )

द्वासुपर्णेति वाक्येन यद्वैतं दृश्यते सदा ।
एकः सुपर्णेत्यद्वैतं चक्षुर्धाता दधातु नः ॥
(१०-१५८-३-३)

( २६ )

अग्निरेव प्रथमो देवतानां,
वायुनैव प्राणिनः प्राणयन्ति,
सर्वरूपी भगवान् ब्रह्मणस्पतिः ।
सूर्य आत्मा जगतस्तथुषश्च ॥
(१-११५-१-४)

— (क्रमशः)

# अन्तर्मुखो भव

जगन्नाथो वेदालङ्कार, श्रीअरविन्दाश्रम, पाण्डिचेरी

कस्यापि मन्दिरस्य पार्श्वे एकस्मिन् कुटीरे कश्चित् सन्यासी प्रतिवसति स्म। सयोगवशात् तस्य कुटयाः समक्षमेव एकस्या वेश्याया गृहमासीत्। संन्यासिमहाराजः तस्या गृहं गच्छत अनेकजनान् प्रतिदिनं पश्यति। अमी जना. कियत् पापमयं जीवनं यापयन्ति इति विचिन्त्य सोऽत्यन्तम् अदु ख्यत्।

एकदा स वेश्यामाहूय निर्भर्त्सयामास–अयि पापिनि! त्वं रात्रिं दिव पापकर्मनिरता तिष्ठसि। यदा मृत्युरायास्यति तदा त्वं किं करिष्यसि?

साऽतीव दु खिता सती करुणस्वरेण भगवन्तं प्रार्थयितुमारेभे ' ' 'हे प्रभो! उद्धर माम् अस्मात् पापात्। सा प्रतिदिवसं प्रार्थनामकरोत् परम् अन्यां जीविकामलभमाना तां वृत्तिं त्यक्तुमपि नाशकत्।

संन्यासिमहाभागः तां पूर्ववदेव तत्कर्म कुर्वतीं दृष्ट्वा अतितरां विषण्णः रुष्टश्च बभूव। अतोऽसौ तां प्रभावयितुम् अपरां युक्तिम् अचिन्तयत्। स बहिरुपविश्य तस्याः गृहं गच्छतां पुरुषाणां गणनामारब्धवान्। प्रत्येकं पुरुषाय स एकं दृषत्कणम् उत्थाप्य एकस्मिन् स्थाने न्यदधात्। शनै. शनैः उपलशकलाः पुंजतां प्राप्तुमारभन्त, कतिपयदिनानन्तर च तत्र प्रस्तरखण्डानां महास्तूपः निर्मितोऽभवत्।

संन्यासिमहाराजः पुनस्तां वेश्यामाहूय तं स्तूपं दर्शयन् अवादीत्–'पश्य अयमस्ति तव पापानां महाराशिः। मम कथनमनादृत्य त्वमिदं कलुष न अत्यजः। एतावद्बृहता पापनिचयेनैव त्वं लप्स्यमानपरदवदण्डस्य अनुमानं कर्तुं पारयसि।'

स्वपापपुंजं प्रेक्ष्य सा वराकी वेश्या नितरामकम्पत, गृहमागत्य च करुणं रुदती भगवन्तमवोचत–'किं करोमि सम्प्रति प्रभो! किं करोमि, क्व गच्छामि, बहुपापग्रस्ता जाता अहम्। हे कृष्ण! हे मुरारे! उद्धर माम्। समापय मम पापजीवनमिदम्।' एवं ब्रुवाणा सा गतसंज्ञा बभूव।

पश्चात्तापवशात् तदीयहृदयात् निःसरन्त्या सत्यप्रार्थनया भगवान् नितरां प्रीतः। तस्यामेव रात्रौ च सा गतासुरभवत् दैववशात् संन्यासिमहाराजोऽपि तस्यां निशि निधनमवाप।

मृतयोः तयोः यमदूताः संन्यासिनः सूक्ष्मदेहं बलात् नरकालयं प्रति आकर्षन्त आसन्, वेश्यायाः सूक्ष्मशरीरम् च विष्णुदूता अत्यादरेण विष्णुलोकम् उपनयन्तः अदृश्यन्त। संन्यासी क्रोधाग्निदग्धः उच्चैः आक्रोशत्— 'भगवतोऽपि धर्माधर्मज्ञानं नास्ति। सन्यासिने मह्यं निरयः वेश्यायै च निजलोकः प्रदत्तः।'

एवन्निशम्य विष्णुदूतास्तं प्रबोधयन्त अब्रुवन्-कृतं क्रोधेन, अलम् रोषेण महाराज। न कदापि अधर्ममाचरति भगवान्। सत्यमिदं यत् ससारे वसता भवता स्वशरीरम् अतिपवित्रतया रक्षितम्, न च कृतं किमपि पापकर्म इन्द्रियैः। तत्परिणामस्वरूपमेव भक्तैः भवतः शरीरं पुष्पमाल्यैः समलंकृत्य अन्त्येष्टिक्रिया उपक्रान्ता। भवतो देहः यस्यादरस्य अधिकारी आसीत् स तेन लभ्यत एव। वेश्या पुनः स्वशरीरम् अनेककलुषैः अत्यन्तदूषितम कार्षीत्। अतश्च दृश्यतां यत् न नाम स्पृशत्यपि कश्चित् तस्याः शरीरम्, वायसाः तत् विदारयन्ति, लुञ्चन्ति, विलिखन्ति, खुरन्ति, विष्किरन्ति च, अपस्किरन्ते च गृध्राः। किन्तु हार्देन पश्चात्तापेन मनसः पवित्र्येण च सा स्वर्गं गच्छति। भवांस्तु निरन्तरं स्वमनसः पापचिन्तननिरतत्वात् नरकं

प्रयाति । भवतां मनः सदैव तस्या. पापपरिगणने व्यापृत नाभवत् किम् ?

न खलु परपापप्रेक्षण भक्तानां कर्तव्यम् । तैस्तु सदा स्वदोषेषु दृष्टिर्देया । सर्वेषाम् अन्तरस्थान् गुणदोषांस्तु प्रभुरेव ज्ञातुं प्रभवति ।

कथासार—

दृष्टिर्देया निजे दोषे नान्यदीये कदाचन ।
परदोषदृश. शुद्धिर्मनसः सम्भवेत् कथम् ।।
शुचौ देहे शुचौ प्राणे शुचिषु स्वेन्द्रियेषु च ।
चिन्तयेद्योऽशुचीन् भावान् मनसा स सदाऽशुचिः ।।

---

( २०९ पृष्ठस्य शेषांशः )

सिद्धान्तस्य दार्शनिकविवेचने आपाततः उपादेयः प्रतीयते तथापि मूलभूततत्त्वस्वरूपप्रतिपादने स असमर्थ एव ।

जैनदर्शनस्य आचारमीमांसा महत्त्वपूर्णा वर्तते । किन्तु अस्य दर्शनास्यायं महान् दोषः यत् कर्मफलदातार ईश्वर एतन्नागीकरोति । किन्तु सिद्धान् एव ईश्वरस्थाने प्रतिष्ठाप्य अस्य दोषस्य निवारणस्य प्रयासः क्रियते ।

---

# शोक-समाचार

पाठकों को जान कर अत्यन्त दुःख होगा कि गुरुकुल के सुयोग्य स्नातक श्री सुखदेव जी वेदालकार का २८ सितम्बर सन् १९६४ को हृदय-गति रुक जाने से स्वर्गवास हो गया है ।

आप स्वभाव से बड़े सीधे व किसी से द्वेष नहीं रखते थे । तथा सारे जीवन भर ब्रह्मचर्यपूर्वक रहे ।

हम प्रभु से प्रार्थना करते हैं कि वह दिवगत आत्मा को शान्ति प्रदान करे और सम्बन्धियों को दु.ख सहन करने की शक्ति प्रदान करे ।

—सम्पादक ।

## सम्पादकीयटिप्पण्यः

### दीपावलीपर्व निर्ऋत्या विलासश्च

श्रावणीविजयादशम्यादिपर्ववद् दीपावलीमहोत्सवोऽपि सोल्लासं सोत्साहञ्च मान्यते हिन्दुधर्मानुयायिभिः। परब्रह्मणोऽवतारभूतस्य सत्त्वगुणसम्पन्नस्य विष्णोः पत्न्याः लक्ष्म्या देव्या इद पर्व विद्यत इति सनातनधर्मसम्बद्धजनानां सुनिश्चितोऽय विश्वासः। अतिपुरातनकालादारम्य पर्वणानेन बह्व्यः घटना अपि सुसम्बद्धा। तासु काश्चिदित्थ—यथा, अयोध्याप्रवेश समकालमेव रामस्य रामराज्यमप्यस्मिन्नेव पर्वणि स्वजनिमालेभे। महामहिमशालिनां दयानन्दरामतीर्थादिस्वामिमहाभागानामप्यस्मिन्नेव दिने आत्मदीपनिर्वाणं समजायतेति केचन। अपरे केचन देहस्थितप्रतिरोम दीपायितमद्य दयानन्दर्षीणामिति ब्रुवते। प्राय सर्वे भारतीया अस्मिन् दिने लक्ष्मीपूजनं कुर्वते यतोहि विशेषतः वैश्यसम्बद्धमिदं पर्व। परं प्रश्नोऽयं विचारणीयो यदस्मिन् वष विष्णोः पत्न्या लक्ष्म्या देव्या. समाराधनस्य पूजनस्य वा वयमधिकारिणोऽपि स्मो न वा? पापाचारभ्रष्टाचारादिदुर्वृत्तशीलानां बहूनां भारतीयानां विशेषतो व्यापारिवर्गाणां धनोपार्जनं साधुसाधनै र्न विद्यते शास्त्रेषु विष्णुस्तु सत्त्वस्वरूपः प्रथितस्तस्य सृष्टिस्थितिहेतुभूतस्य सत्त्वस्वरूपस्य भगवतो विष्णोः सहधर्मचारिणी लक्ष्मीः किं सत्त्वात्मिका नास्ति ? लक्ष्मीरेषा सत्त्वात्मकस्य विष्णो पत्नीति सनातनोक्तिर्यदि सत्या तद्दुर्भिक्षविधायकैर्नरसंहारकारकैः सज्जनविगर्हितैरसत्यसाधनैर्धनोपार्जनं कुतः क्रियते ? किमिदं सत्यं लक्ष्मीसमाराधनं भविष्यति ? किं सत्त्वात्मिकाया लक्ष्म्या उपलब्ध्यै सत्त्वप्रधानानि साधनानि नापेक्ष्यन्ते ! व्यापारिवर्गेष्वेव लक्ष्मीपूजनं विशेषतोऽवलोक्यते। अधुना त एवा सत्यमूर्त्तयश्छलच्छिद्रपरायणाः सत्त्वशून्याः। अस्मन्मते तु तेऽस्मिन् वर्षे निर्ऋतिपापदेवताया मण्डनं पूजनं वा विधास्यन्ति न लक्ष्म्याः।

रामेराज्यं प्रशासति तु

निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
नित्यपुष्पा नित्यफलास्तरवः स्कन्धविस्तृता.,
कामवर्षी च पर्जन्य. सुखस्पर्शश्च मारुतः।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः।

एवं बहुविधं सुखसमृद्धिसंयुक्तं निरामयं स्वर्गोपमं रामराज्यमुपवर्णित भगवता वाल्मीकिमुनिना। अधुना किं पूर्णतया विपरीता स्थिति नं विद्यते भारतवर्षस्य ? सर्वत्र महार्घताया. साम्राज्यं वरीवर्ति। अन्नादीनां कृत्रिमाभावात् दुर्भिक्षस्य स्थितिसमपा दिश्रीसम्पन्नैर्ग्रामकृषकैर्व्यापारिवर्गैस्तत्सहायकै सर्वकारपदाधिकारिभिश्च। अतएवास्माभिरेतन्निगद्यते यद्दीपावलीमहोत्सवस्य वयमधिकारिणो न। यदि वय लक्ष्म्याः पूजन विधास्यामस्तत् तु निर्ऋतिपापदेवताया भविष्यतीत्यस्यामवस्थामस्माकं दृढोऽयं विश्वासः।

### नेहरूभारतवर्षस्य परममित्रं श्री ख्रुश्चोवमहोदयोऽपदस्थः

भारतवर्षदृष्ट्या नेहरूयुगस्यसमाप्तिसमकालमेव नेहरोर्भारतस्य च परममित्रत्वमापन्नौ केनेडीख्रुश्चेवावपि शान्तिदूतौ व्यपगताविति विचिन्त्य भारतीयजनानामतीव संतप्यते चेतः। नेहरूकेनेडीमहाभागौ तु महाप्रभोरङ्के स्थितौ स्तः परं ख्रुश्चोवमहोदयस्तु रूसदेशवास्तव्यैर्नेतृवर्गैर्मूर्धन्यस्थानात् प्रच्यावित। कृतघ्नोमित्रद्रोहीदुष्टश्चासौ चोन सर्वानपि भूगोलस्थितान् आत्मसात् कर्तुं सततं समुद्यतः सन्नप्यनयो र्द्वयो र्महापुरुषयोः साधुनीत्या कथञ्चिदपवारितो नापारयत् स्वदुष्टाशयस्य पूर्ति कर्तुम्। बहवो भारतीया पृच्छन्ति, यदहो कीदृशी विचित्रैषा शासनपद्धति र्विद्यते रूसदेशे साम्यवादाभिधायिनी। जातीयचरित्रञ्च तत्रत्यानां विचित्रपरम्परालोककरम्। पूर्वक्षणे यो

मूर्धन्यः शिरोमणिभूत सर्वपूज्योऽपरस्मिन् क्षणे स एव गर्ह्यः गर्ते पतित. भ्रष्ट पादयोर्लुण्ठति । सर्वमपि मेवाकार्यं तस्य विस्मयते । पदभ्रष्टे सत्यपि किमिद न सम्भाव्यते यद् देशस्य सम्मानितपुरुषरूपेण स जीवतु । तस्य स्वचित्रं पुस्तकं चाप्येकस्मिन्नेव रात्रावापणादपवार्य न जाने कुत्र निक्षिप्ते । विचारस्वातन्त्र्यस्य तत्र नामापि नोच्चार्यते स्वतन्त्रतादेव्यास्तु कथैव का । अत. स्वपदात् प्रभ्रशस्य किं कारणमिति श्री ख्रुश्चोवमहोदयमुखान्न श्रोष्यामो वयम् । भारतवर्षस्य तु नैतादृशी परिपाटी । अस्तु! अस्मभ्य तु केवल विचारणीयमेतत् यद् भारतं प्रति रूसदेशस्य नव्यनेतॄणां का नीतिर्भविष्यति ! श्री ख्रुश्चोवकाले भारतस्य साहाय्यकरणाय या नीतिर्निर्धारिताऽऽसीत् सा किमद्यापि परिपालयिष्यते । यच्च वचन प्रदत्तं किं तत् पूरयिष्यते नव्यागन्तुकै ?

—भगवद्दत्तो वेदालंकारः



# साहित्य-समीक्षा

( समालोचनार्थ प्रति पुस्तक की दो प्रतियां पत्रिका-कार्यालय में आनी चाहियें )

## शुक्लयजुर्वेदसंहितोपनिषच्छतकम् (द्वितीयावृत्तिः)
### अध्यात्मज्योत्स्नाविवृत्तिसमलङ्कृतम्

लेखकः—स्वामी महेश्वरानन्द महामण्डलेश्वर प्रकाशकः — श्रेष्ठिप्रवर श्रीमान् गंगाशंकर जी व्यास, माटुंगा मुम्बापुरी । पृष्ठसंख्या ४६१, मूल्यम् ५) रुप्यकाणि ।

महामण्डलेश्वराणां श्रीस्वामिमहेश्वरानन्दमहाभागानां पुस्तकमिदमस्माभिरवलोकितं बहुषु च स्थलेषु मनोयोगेन पठितम् । इतः पूर्वमपि महाभागानां विरचितं चातुर्वर्ण्यभारतसमीक्षाभिधं पुस्तकमस्मिन् स्तम्भेऽस्माभिः समालोचितम् । अस्य पुस्तकद्वयस्यावलोकनेन स्वामिवर्याणां पाण्डित्यविषये न कस्यापि विप्रतिपत्तिर्विचिकित्सा वेति भवितुमर्हतीति निश्चप्रचमिव जोघुष्यतेऽस्माभिः । स्वामिमहाभागा अद्वैतसिद्धान्ते शांकरमतानुयायिन शिवोपासका विद्यन्ते। मन्त्राणां व्याख्याने पदे पदे तेषां स्वाभीष्टमेकात्म्यवर्णनं दृग्गोचरीभवति । वयं तु द्वैतसिद्धान्तमेव शास्त्राणामभीष्टं चरमं च लक्ष्यमिति मन्यामहे । अत एव मन्त्राणां व्याख्याने बहुषु स्थलेषु मतवैपरीत्यं स्वाभाविकमेवास्माकम् । निदर्शनाय—'द्वा सुपर्णा सयुजा सखाया०' 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचतिमुह्यमानः, इत्यत्र द्वयोर्वर्णनं पार्थक्य विभेदो वा अत्यन्तं स्पष्ट.। मन्त्रवर्णने भेदस्य काल्पनिकत्वमद्वैतपरिपोषणायोपाधेरारोपणमिति सर्वं प्रयत्नजात कल्पनाविजृम्भितम् । मन्त्रे त्वनीशत्वं जीवस्येशत्वञ्च परमात्मनः स्पष्टं प्रतिपाद्यते। जीवस्य शोकहेतुतायामनीशत्वमेव कारणमीशसन्दर्शनात् स शोको व्यपगच्छति । अहो ! महदाश्चर्यं यत् सर्वशक्तिमान् सर्वज्ञोऽयं परमेश्वरो ऽप्यद्वैतवादिगृहघटितोपाधिवृकक्रीडनकाद् बिभेतीशत्वं विहायानीशत्वमुररीकरोति । कथ न स्वीक्रियते उपाधिरेव शक्तिमत्तरः परमेश्वरात् ? अत उपाधेरुपनेत्रं विहाय यदा मन्त्राणां गुह्यतमं रहस्य द्रष्टुं प्रयतते कश्चित् सूरिस्तदा द्वैत मेव सर्वत्र दृष्टिपथमायाति । अस्तु ! न वयं द्वैताद्वैतसिद्धान्तसमरप्रियाः केवल विचारसरणिरेवास्माभिरत्र प्रकटीकृता । अत्रैतदप्यवधेयं यत् मतवैपरी-

त्यस्मिन् जगति स्वाभाविक यतोहि मुण्डे मुण्डे मतिर्भिन्नेति सर्वत्रावलोक्यते । अतो भिन्नमते सत्यपि स्वामिवर्यैरध्यात्मपक्षमवलम्ब्य यत् मन्त्राणां सुगूढरहस्यं सुललितभाषया समुद्घाटितं तत्त्वभिनन्दनीयम् । यजुर्वेदादवचित्य शतमन्त्राणां सुविशदं व्याख्यानमस्मिन् पुस्तके विद्यते । पुस्तकस्य शैली प्रवाहपूर्णा सुरुचिरा च विद्यते । अस्यात्युत्तमपुस्तकस्य विरचनाय वयं स्वामिमहाभागानामभिनन्दनं कुर्मः । सर्वत्र भूतले पुस्तकस्य प्रचारं प्रसारं च कामयामहे । —भगवद्दत्तो वेदालंकारः

---

# कौटिलीय अर्थशास्त्र

राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः
अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ।

धर्मपूर्वक प्रजा की रक्षा करने वाले राजा का 'स्वधर्म' शासन आदि राजधर्म स्वर्गप्राप्ति के लिये होता है । इसके विपरीत प्रजा की रक्षा न करने वाले राजा का मिथ्या दण्ड नरक के देने वाला होता है ।

★ ★

चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् ।
नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः ॥

चारों वर्ण, चारों आश्रम तथा लोकों के आचार की रक्षा करने के कारण विनष्ट होते हुए सब धर्मों का राजा ही उन सब का प्रवर्तक होता है । अतः यही राजधर्म है ।

★ ★

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥

प्रजा के सुख में ही राजा का सुख है और प्रजाओं के हित में ही उसका हित है । अपने को प्रिय लगने वाली बात में राजा का हित नहीं है । प्रजाओं का प्रिय ही राजा के लिये हितकारी है ।

# भाषण

**श्री रघुवीरसिंह शास्त्री, मंत्री आर्य प्रतिनिधि सभा पंजाब ( १५ हनुमान रोड नई दिल्ली ) द्वारा ३० अक्टूबर सन् १९६४ को प्रेस कान्फ्रेंस में दिया गया वक्तव्य**

आज से कुछ सप्ताह पश्चात् ३० हजार से अधिक विदेशी कैथोलिक ईसाई मिशनरी भारत को ईसाई संस्कृति से प्रभावित करने व अनेक राजनैतिक दुरभिसंधियों के साथ बम्बई में २८ नवम्बर से ६ दिसम्बर तक होने वाली (इन्टरनेशनल यूकोरिस्टिक कांग्रेस) अन्तरराष्ट्रीय कैथोलिक सम्मेलन में भाग लेने पहुंच रहे हैं।

२ इनमें से बहुत से व्यक्ति ऐसे देशों से भी आयेंगे जिनकी भारत के प्रति नीति सौहार्द-पूर्ण नही है।

३ इस कांग्रेस को भारत में आयोजित करने का मुख्य कारण केवल यही है कि भारत एक धर्म-निरपेक्ष राष्ट्र है।

४ इस कैथोलिक विश्व कांग्रेस के आयोजक भारत सरकार की धर्म-निरपेक्षता की भावना का अनुचित लाभ उठा रहे हैं और भारत सरकार भी इस कांग्रेस को सफल बनाने के लिए अभूतपूर्व सुविधायें बड़ी उदारता के साथ प्रस्तुत कर रही है।

५ ऐसा प्रतीत होता है कि भारत सरकार इस भ्रम का शिकार हो गई है कि साधारणतया अन्तरराष्ट्रीय ईसाईवाद व विशेषतया कैथोलिक सम्प्रदाय, धर्म निरपेक्ष विचारधारा का प्रतिपादक है।

यह नितान्त असत्य है। अन्तरराष्ट्रीय कैथोलिक सम्प्रदाय किस प्रकार भारत की धर्मनिरपेक्षता को नष्ट करने का षड्यन्त्र कर रहा है, यह निम्न उदाहरणों से स्पष्ट है:—

(क) संसार में केवल एक ईसाई धर्म ही सच्चा धर्म है।

पोप पाल ( षष्ठ )

(ख) रोमन कैथोलिकों और अन्य ईसाई सम्प्रदायों की यह धारणा है कि धर्म-निरपेक्षता की विचारधारा ही उन के मार्ग में सब से बडी बाधा है और इस विचारधारा को नष्ट करने के लिए राजनैतिक शक्ति का उपयोग करेंगे। ( सर चार्ल्स वेन्टवर्थ डिल्क ग्रेट ब्रिटेन ) नामक पुस्तक का पृष्ठ ५७५।

(ग) इस युग में ईसाईयत के सबसे प्रबल विरोधी इस्लाम, बौद्धमत या हिन्दू-धर्म आदि नहीं हैं अपितु विश्वव्यापी धर्म निरपेक्ष नीति की पद्धति ही है। ( डा० रुफुस एम० जोन्स की येरुशलम में हुई अन्तरराष्ट्रीय मिशनरी कांसिल के अवसर पर घोषणा। )

(घ) विश्व के अन्य भागों की भांति भारत में भी धर्म को वास्तविक खतरा धर्म निरपेक्षता की विचारधारा से ही है। ( क्लिफर्डमेन्स हार्डडाक्टर आफ डिविनटी। )

केवल इतना ही नहीं बल्कि समस्त कैथोलिक संस्थायें ईसाई युवकों को प्रेरित कर रही हैं कि वे सब धर्म निरपेक्ष संगठनों और उस विचारधारा

के समाचारपत्रों व पत्रिकाओं में इस उद्देश्य से प्रविष्ट हो जाये कि वे उनके अन्दर रह कर धर्म-निरपेक्षता की विचारधारा को छिन्न-भिन्न कर सकें। यदि इस का भी प्रमाण चाहिए तो यह लीजिए——

यह अत्यन्त आवश्यक है कि ईसाई युवक बडे-बड़े शिक्षा केन्द्रो में उत्तरदायित्व पूर्ण पदों पर प्रतिष्ठित हों, विद्यार्थीवर्ग व ग्रेजुएटगण लेखनी के द्वारा बहुत प्रभावपूर्ण कार्य कर सकते हैं। उन्हें दैनिक पत्रों, साप्ताहिक पत्रिकाओं में खूब लेख लिखने चाहिये। यह आवश्यक नही कि वह लेख विशेषरूप से ईसाइयों के सम्बन्ध में ही हों, अलबत्ता उनमें ऐसे लेख लिखे जाये कि जिनसे उनका नाम लेखकों के रूप में विख्यात हो जाये और उस के बाद उनको इस प्रकार के अवसर सरलता से मिल जायें कि वे धर्म निरपेक्षता के समर्थक पत्र पत्रिकाओं में आगे चल कर स्पष्टरूप से ईसाईयत की विचारधारा का खुल कर प्रसार कर सकें।

( लाइट आफ लाइफ ) नामक पत्रिका जून १९६४ में प्रकाशित 'ए काल टू क्रिश्चियन स्टूडेन्ट्स् एण्ड ग्रेजुएटस्' शीर्षक लेख में डेविड एच० एडेनी एम० ए० )।

भारत सरकार अभी तक इस बात से बिल्कुल अनभिज्ञ मालूम पडती है कि अखिल भारतीय महिला सम्मेलन (आल इण्डिया वीमेन कान्फ्रेन्स) और राष्ट्रीय महिला परिषद् ( नेशनल कांसिल आफ वीमेन ) में भी ईसाई एजेण्ट अपने उद्देश्य के प्रति सक्रिय हैं प्रमाण यह है:——

हम ईसाईयों को उन सामाजिक नैतिक और शिक्षा सम्बन्धी आन्दोलनों का भी समर्थन करना चाहिए जिनमें महिला संस्थाये धार्मिक आधार पर कार्य कर रही हो। क्योकि यह भी एक ऐसा साधन बन सकता है जिससे हम इन भारतीय महिलाओं के हृदय में ईसाईयत के स्वर्गराज्य की विचारधारा के प्रति आकर्षण पैदा कर सकती है।

मिस शैलोमथ विन्सैन्ट एम० ए० प्रोफेसर आई० टी० कालेज लखनऊ, मन्त्रिणी अवध प्रदेश (शाखा आल इण्डिया वीमेन्स कान्फ्रेंस )।

भारत में बडी सख्या में जो विदेशी लोग अंग्रेजी के प्राध्यापक कृषि तथा तकनीकी औद्योगिक सहकारी समितियों में सलाहकार और कृषि विशेषज्ञ के रूप में काम कर रहे हैं उनमे अधिकांश अन्तरराष्ट्रीय कैथोलिक सम्प्रदाय के गुप्त एजेंट हैं और इनकी सख्या इतनी अधिक है कि उनकी उपस्थिति भारत की राष्ट्रीय सुरक्षा के लिए खतरा बन गई है। भारत सरकार ने शीघ्र ही यदि इस विषय में सतर्कता से काम न लिया तो इस से स्थिति और भी विषम हो सकती है। यदि भारत सरकार इस जाल में फसने से बचना चाहती है तो उसको अविलम्ब कुछ न कुछ कदम उठाने के लिए तैयार होना ही होगा।

इस स्थिति में आर्यसमाज भारत के करोडों हिन्दुओ की भावना का प्रतिनिधित्व करता हुआ मांग करता है कि:——

१ सारे विदेशी पादरियों को दिसम्बर ६४ तक भारत छोड़ने के लिए विवश किया जाये।

२ सारे विदेशी पादरियों को अन्तरराष्ट्रीय गतिविधियों की केन्द्रीय गुप्तचर विभाग

द्वारा जांच कराई जाये क्योंकि उन की उपस्थिति निश्चित रूप से देश के लिए खतरा बनी हुई है ।

३ विश्व कैथोलिक काग्रेस को दी जाने वाली सरकारी व अर्ध सरकारी सहायता व सुविधाये तुरन्त बन्द कर दी जाये ।

४ किसी भी मत के प्रचारकों को आवास के लिए स्कूल और कालेज बन्द करने की अनुमति न दी जाये ।

५ पोप पाल षष्ठ कैथोलिक सम्प्रदाय के प्रमुख की हैसियत से भारत आ रहे हैं, इस लिए किसी भी धर्म निरपेक्ष सगठन की ओर से पोप का स्वागत अवाच्छनीय है ।

६ यदि इस अनर्थ को अभी से न रोका गया तो भारत में धार्मिक शान्तिके भग होने की भारी आशका है जिसका उत्तरदायित्व इस स्थिति मे पोपपाल और विदेशी ईसाई पादरियों पर होगा ।

अन्तरराष्ट्रीय कैथोलिक सम्प्रदाय भारत सरकार की आंखों में किस प्रकार धूल झोंक रहा है इस का ताजा उदाहरण वह समाचार है जो इसी मास से प्रथम सप्ताह में भारतीय समाचार पत्रों में भ्रामक शीर्षक के अन्तर्गत छपा है—

नया हस्पताल और कालेज कैथोलिक चर्च का भारत को उपहार ।

हमारे निजी संवाददाता द्वारा, बम्बई ६ दिसम्बर यहां होने वाली भारतीय तथा विदेशी कैथोलिक चर्च की ३८ वीं यूकेरिस्टक काग्रेस के अवसर पर भारत को दिये जने वाले उपहारों में एक उपहार होगा बंगलौर में मैडिकल कालेज और एक हस्पताल । कालेज और हस्पताल के भवनों के लिए मैसूर सरकार द्वारा भूमि प्राप्त की जा रही है । इसमें २० प्रतिशत गैर कैथोलिक छात्रो को स्थान देने का प्रस्ताव है ।

—हिन्दुस्तान टाइम्स नई दिल्ली ।
७ अक्टूबर १९६४ ।

इस समाचार से ऐसा प्रतीत होता है कि कालेज और हस्पताल विश्व कैथोलिक सम्प्रदाय की ओर से धर्म निरपेक्ष भारत को एक उपहार के रूप में दिया जा रहा है जिसमें केवल २०प्रतिशत स्थान गैर कैथोलिक छात्रों को देने का प्रस्ताव है । यह प्रस्ताव मात्र है और यह सीटे भी सुरक्षित नही की गई हैं बल्कि गैर कैथोलिक छात्रों की आड में यह सीटे भी अन्य ईसाई सम्प्रदायो के छात्रों को दी जाये तो आश्चर्य नही, यही इस उपहार का वास्तविक रहस्य है । विश्व कैथोलिक सम्प्रदाय इतना अबोध नही है कि अकारण ही उपहार बाटता फिरे, जितनी अबोध इस उपहार को ग्रहण करने के लिए समुत्सुक भारत सरकार है । इस उपहार के पीछे क्या रहस्य छिपा है यह इस कैथोलिक सूचना से स्पष्ट है––

भारत सरकार मे एक उच्चस्तरीय क्रिश्चियन मेडिकल कालेज की स्थापना के लिए ईसाई पादरी इस आधार पर तीव्र आन्दोलन कर रहे हैं कि भारत सरकार द्वारा स्थापित सरकारी मेडिकल कालेजों में सैद्धान्तिक और आध्यात्मिक प्रभाव पैदा करने की सुविधाये नही हैं । इस के अतिरिक्त इन में हिन्दुओं, मुसलमानों तथा अन्य धार्मिक वर्गो की जनसख्या के अनुपात के आधार पर इस तरह प्रवेश की व्यवस्था की गई है कि ईसाईयो के लिए ( अत्यन्त अल्प सख्यक होने के कारण ) वहां प्रवेश का अवसर नहीं है । साथ ही मिशन हस्पतालों के लिए शिक्षित ईसाई डाक्टरों की बहुत कमी अनुभव की जा रही है और ग्रामीण क्षेत्रों में तो उनकी बहुत ही जरूरत है ।

# हरिद्वारतः प्रकाशिताः संस्कृतपत्रपत्रिकाः

( डा० रामगोपाल मिश्र एम ए. पीयच्-डी )

संस्कृतभाषामाध्यमेन प्रमोदैकनिकेतनानां कालान्तरेऽप्यहीनरसानां, रसाप्लावितानां, प्रतिपलनव्यभावभूषितानां विविधप्रबन्धरमणीयानां द्राक्षावद्बाह्याभ्यन्तरमनोहराणां तडित्वत्वरितास्तिभावयुतानां संस्कृतपत्रपत्रिकाणां प्रकाशनं भारतवर्षस्य विविधप्रदेशेषु भवति स्म । 'काशीविद्यासुधानिधि:' इति नाम्नैका ग्रन्थप्रकाशनपरायणा प्रथमासंस्कृतपत्रिका वाराणसीत: १८६६ ई० तमे खिस्ताब्दे प्रकाशिता । तदनन्तर प्रगतिपथमनुसरन्तीनां नवयुगनिर्माणसफलीभूतानां विद्योदय-विद्यार्थि-आर्षविद्यासुधानिधि-आर्यब्रह्मविद्या-श्रुतप्रकाशिका - विज्ञानचिन्तामणि-उषा-संस्कृतचन्द्रिका-सहृदया-काव्यकादम्बिनी-सस्कृतपत्रिका-साहित्यरत्नावली- मञ्जुभाषिणी-समस्यापूर्ति-विद्वत्कलादीनां विविधकलापरिपूर्णानां सस्कृतपत्रपत्रिकाणां प्रकाशनमेकोनविंशशताब्द्यामभवदिति । विंशतिशताब्द्यां सा सरणि: सततं विस्तृता । वयमत्र गुरुकुलकांगड़ीहरिद्वारत प्रकाशितानां संस्कृतपत्रपत्रिकाणां संस्कृतमिश्रितपत्रपत्रिकाणां वा समुपलब्धसंक्षिप्तसूचनया गीर्वाणवाणीसेवाजुषां विदुषां मनांस्यावर्जयामो निवेदयामश्च येषां समक्षं विद्यन्ते ये प्राचीनाङ्का: सस्कृतपत्रपत्रिकाणां कृपया कृतार्थी कुर्वन्तु सूचनया ।

## उषा

१९१३ ई० तमे खिस्ताब्दे 'उषे' ति नाम्नैका मासिकी संस्कृतपत्रिका सर्वप्रथम प्राचीप्रांगणे समुदिता । पत्रिकेयं अज्ञानान्धकारदूरीकरणसमर्था ज्ञानस्वरूपा कं सहृदयहृदयं नाकर्षितवती । मनोज्ञा एषा पत्रिका पण्डितहरिश्चन्द्रविद्यालंकारमहाभागस्य सम्पादकत्वे प्रकाशिताऽऽसीत् । सम्पादकमहाभाग: सम्पादकीये स्वकीयं प्रावीण्यं प्रदर्शयन्, जनयञ्जनसमूहं प्रत्यनुरागं त्रिवर्ष यावत्प्राकाशि पश्चात्केनापि कारणेन प्रकाशनाद्विरता रता क्वचिदेषा ( १९१३ खिस्ताब्दत प्रारभ्य १९१६ ई० यावत् ) । १९१८ ई० तमे वर्षे पत्रिकेयं पुनरप्युदिताऽस्तगता १९२० ई० तमे खिस्ते । अस्मिन्काले अस्या: पत्रिकाया: सम्पादक. पण्डितप्रवरशशिभूषण विद्यालंकारमहोदय आसीत् ।१ अष्टचत्वारिंशत्पृष्ठयुतायां पत्रिकायामस्यां काव्य-गीत-समीक्षा-शास्त्रचर्चा-निबन्धादीनां प्रकाशनं भवति स्म । तात्कालिकगुरुकुलप्राध्यापकानां विद्यार्थिप्रवराणां वा विविधरचनाभि: पत्रिकेयं विभूषिताऽऽसीदिति । भाषा त्वासीदस्या अतीव सरला माधुर्यपूर्णा च । 'शारदा' पत्रिकायामस्या पत्रिकाया: सूचनेत्थं समुपलभ्यते — 'इमामुषामवलोक्य सञ्जात: कोऽपि मधुरो हृदि मनोरथाङ्कुर: ।२

## देववाणी

गुरुकुलकांगड़ीमहाविद्यालयस्य संस्कृतविभागे 'सस्कृतोत्साहिनी' नाम्नैका सभा १९१८ ई० तमे वर्षे सस्थापिताऽऽसीद्विद्वद्भि: । तत्सभाया: मुखपत्रिकारूपेण देववाणी' इति नामधेयाऽमरवाणीं पुनरुत्साहयितुमुज्जीवयितुं वा हस्तलिखितपत्रिका १९१८ ई. तमे खिस्ताब्दे प्रकाशिता । 'मृता संस्कृतभाषा' इति तु वदतो व्याघात एव । अमरा या वाणी सैव मरणधर्मयुता इत्याश्चर्यस्य चरमसीमा ।

---

१. यद्यपि पोरबन्दरस्थ श्रीशकरदेवविद्यालंकारमहाभाग: स्वकीयेन पत्रेण सूचितवान् यत्सम्पादकास्पदं नामरहितमासीत् तथापि श्रीधर्मदेवविद्यामार्तण्डमहाभागस्य सूचना वैपरीत्यमनुसरति ।

२ शारदा (प्रयाग) १, २ ।

या मरणधर्मसंयुता सा भाषा नामराणां भाषा। अधुनाऽपि सर्वथा प्रोल्लसति गीर्वाणवाणी प्रकटयति बहुरूपाणि।

'देववाणी' पत्रिकायां सरसरचनाः प्रकाश्यन्ते स्म। द्रव्याभावादेव पत्रिकेयं हस्तलिखिताऽऽसीत्। पत्रिकेयं महता प्रयासेन बहुवर्षपर्यन्तं प्रामोदयत रसिकप्रवरान्। पत्रिकेयं मासिक्यासीत्। 'देवभिक्षु' इत्युपाधिधारी 'भीमसेनमहाभाग.' देववाणीपत्रिकायाः सम्पादकास्पदमलमकार्षीदिति श्रूयते। तदुत्तरं संस्कृतोत्साहिन्याः परिषदः इतरेऽपि मन्त्रिणोऽस्याः सम्पादकत्वमकुर्वन्।

## गुरुकुल-पत्रिका

'गुरुकुलपत्रिका' सर्वप्रथम १९४८ ई० तमे वर्षे हिन्दीभाषायां संग्रथ्य प्रकाशिता। १९६० ई० ख्रिस्ताब्दतः पत्रिकेयं संस्कृतभाषायां प्रकाश्यते। १९६३ ई. ख्रिस्ताब्दे दिसम्बर मासादियं संस्कृत-हिन्दीभाषयोर्मिश्रिता पत्रिका विहिता। यद्यप्यधुना हिन्दीभाषा अपि तत्र विराजते तथापि प्राधान्य संस्कृतस्यैव।

गुरुकुलकांगड़ीमहाविद्यालयस्योपकुलपतिप्रेरणया विद्यामार्तण्डोपाधिधारिणो धर्मदेवमहाभागस्य सम्पादकत्वे 'गुरुकुलपत्रिका, सर्वप्रथमं संस्कृतभाषायां प्रकाशिता। तेन विश्रुतपण्डितप्रवरेण सम्पाद्यमानैषा 'गुरुकुलपत्रिका' मासिकी संस्कृतपत्रिका संजाता। नियमतः सततं प्रकाश्यते पत्रीकेयं तथा चाप्रकाशिताङ्कानां सूचना प्रदीयतेऽथवाविशेषाङ्करूपेण प्रकाश्यते पश्चात्। अस्याः पत्रिकायाः वार्षिकं मूल्यं चत्वारि रूप्यकाणि एकाङ्कस्य चत्वारिंशत् नवपणाः। पत्रिकेयमधुना भगवद्दत्तवेदालंकारमहाभागेन सम्पाद्यते सचित्रां विचित्रां चार्वाकारां रसचन्दनर्चचितां मुद्रणत्रुटिरहितां बहुगुणसहितां विविधविषयसम्बन्धिलेखजालालंकृतां सरसगीतगुम्फितां मनोज्ञां पत्रिकां सुरभारतीसेवापरायणविद्वद्प्रवरचकोर वृन्दैश्चन्द्रिका इव सेव्यते। संस्कृतभाषायां प्रकाश्यमाणानां पत्रपत्रिकाणां मध्ये विशिष्टस्थान प्रदीयते संस्कृतानुरागिभिः पत्रिकामिमामनवरतनिष्यन्दिनीम्।

पत्रिकायामस्यां गहनातिगहनाः शास्त्रीया विषया सुगमया सरलया भावार्थप्रकाशनसमर्थया भाषया निरूप्यन्ते। विविधविचारचातुरीभूतेय पत्रिका चतुर्दिङ्निवासिनां विश्रुतविदुषां रचनाप्रकाशनेन महत्स्थान प्रापिता पत्रपत्रिकासु। सुशोभनैषा 'गुरुकुलपत्रिका' संस्कृतभाषायाः प्रचारे प्रसारे च बद्धपरिकरा विद्यते। संस्कृताध्ययनस्याध्यापनस्य च महती समस्या विद्यते समस्ते भारतवर्षे। अमुं विषयमवलम्ब्य सततप्रवाहिविचाराः प्रकटीक्रियन्ते।

इन्द्रविद्यावाचस्पति, वेदमूर्ति पण्डितसातवलेकर, द्विजेन्द्रशास्त्रि, धर्मदेव वेदवाचस्पति, शम्भुशर्म, डा० मंगलदेवशास्त्रि, हरिदत्तशास्त्रि, वेंकट राघवन्, वासुदेवद्विवेदि, रामनाथवेदालङ्कारादीनां महाभागानां विरचिता रचनाः प्रकाश्यन्ते पत्रिकायामस्याम्।

संस्कृतभाषायां न कापि विशुद्धा तिथिवारयुता रचना विरचिता या पूर्णरूपेणेतिहासप्रधाना। न्यूनतामिमां प्रमार्जयितुमधुना बहवो लेखका बद्धपरिकराः सोत्साहा दृश्यन्ते—इत्यसाम्प्रतं न। गुरुकुल पत्रिकायाम्-इन्द्रविद्यावाचस्पतिमहाभागस्य विरचित 'भारतैतिह्यम्' महाकाव्यं सततं प्रकाश्यते। काव्येऽस्मिन् ऐतिहासिकमहापुरुषाणां विवेचनं सरसशैल्यां प्रतिपादितम्। द्विजेन्द्रमहाभागस्य 'स्वराज्यविजयमहाकाव्यम्', क. शम्भुशर्मणः 'श्रीगान्धिनिर्वाणकाव्यमिति' चेति काव्यद्वयमपीतिहासप्रधानम्। 'गान्धिनिर्वाणमहाकाव्ये'—

'नहि वेरेन वेरानि सम्मन्तीध कुदाचन' इति प्रबुद्धबुद्धभगवतः वचनमनुसृत्य हिंसाविषये रहस्यमित्थं प्रकटीभवति 'हिंसा हिंसां प्रबलयति

नच्छान्तये स्याज्जलं हि । क्षान्त्या शान्तिर्भवति न पुनर्वैरनिर्यातनेन । प्रीत्या प्रीतिर्भवति न पुनर्भीतिसन्दर्शनेन "१

यद्यप्युक्तिरेषा तुलसीदासस्य कथन 'भय बिनु होइ न प्रीति' प्रति प्रतिकूल तथापि सुभाषित भवितुमलम् ।

पत्रिकायामस्यां सतत स्फुटगीतय प्रकाश्यन्ते। प्राचोनसंस्कृतसाहित्ये रसभावमय्य सरला. सालङ्कारा लघुगीतयो नोपलभ्यन्ते । अर्वाचीनसंस्कृतसाहित्ये पाश्चात्यप्रभावेण एतादृशी रचना अपि बाहुल्येन लिखिता । धर्मदेव वेदवाचस्पतिमहाभागस्य 'तारकितं नभः' वस्तुतः नवीनोद्भावनामुद्भावयति । यथा—

'प्रफुल्लमेतत् कुमुदै सरो वा,
कार्पासिकेदारमिदं नु जिष्णो ।
सहस्रचक्षुः किमयं बिडौजा,
किं वा समुद्गीर्णमणिः समुद्रः ।।
सनाथिता वा वकुलैर्नदी स्यात्,
चित्राम्बरागुण्ठितसुन्दरी वा ।
किमत्र हंहो विविधैर्विकल्पैः,
सुधांशमत्तारकितं नभः स्यात् ।।२

वासुदेवद्विवेदिमहाभागस्य 'सैन्यगीत'चलचित्रगीतध्वन्यनुसारेण लिखितम् । यथा—

सादरं समीयताम्
वन्दना विधीयताम् ।
श्रद्धया स्वमातृभू,३
समर्चना विधीयताम् ।।

पत्रिकायामस्यां गद्यगीतयोऽपि प्रकाश्यन्ते । यथा—

अरे चीन
दुर्गर्व पीन
रे मर्यादा-विश्वासहीन ।१

इत्थं रसिकजनहृदयावर्जननिपुणा काव्यादिप्रकाशनपटीयसी पत्रिकेयं विदुष सर्वदा सन्तोषयत्विति प्रार्थये कलिकृतान्तत. ।

## भारतोदयः

पत्रमिदं संस्कृत-हिन्दी भाषयो प्रकाश्यते । पत्रस्यास्य गुरुकुलमहाविद्यालयज्वालापुरतः ( हरिद्वार ) प्रकाशन भवति । डा० हरिदत्त शास्त्रिणः एम ए डी. लिट् महाभागस्य सम्पादकत्वे १९६२ ई० तमे वर्षतः सतत प्रकाश्यते । महाभागेनानेन पूर्व १९३६ ई० तमे वर्षे 'कालिन्दी' नाम्नी त्रैमासिकी संस्कृतपत्रिका स्त्रुघ्नपत्तनत: (आगरा) प्राकाशि । अस्याः विस्तृतं वर्णनं 'सागरिकापत्रिकायां कृतम् ।२ अनेनैव कारणेन सम्पादनकर्मणि कुशलोऽयं शास्त्रिप्रवरः केषां विदुषां कर्णपथप्रथितो न ? 'भारतोदयः' इत्यस्मिन्नामधेये पत्रे पडित दीनानाथशास्त्रि, केदारनाथ ओझा, सत्यव्रतशास्त्रि, डा० वासुदेवशरण अग्रवाल—इत्यादीनां विद्वत्प्रवराणां लेखादयः प्रकाश्यन्ते । पत्रमिदं सुगमसंस्कृतकृति प्रचाराय भवत्वित्यहमहर्निशं कामये तथाऽस्य कामनेयं सफली भवतु—

'निशम्यतां लेख ललाम-सञ्चय—
प्रकाशने येन कृतोऽतिनिश्चयः ।
गृहीतसद्धर्मविशेषसंश्रय—
श्चकास्ति सोऽयं भुवि 'भारतोदयः' ।।

---

१. गुरुकुलपत्रिका १४.६ ।
२. गुरुकुलपत्रिका १५.५
३. गुरुकुलपत्रिका १५.८

१. गुरुकुलपत्रिका १५.८
२. सागरिका (सागरतः) २ ४ पृ. ३३९-३४१

# पुरुषार्थ-प्रभेदाः

श्री स्वामिनाथ पाण्डेय, व्याख्याता, सिंहपुरम् (मध्यप्रदेश)

( १ )

प्राप्यस्यैव सदा प्राप्तिः,
प्राप्तस्यैव सुरक्षणम् ।
रक्षितस्य सदा वृद्धिर्
वृद्धौ दानं विशिष्यते ॥

( २ )

प्रथमश्च द्वितीयश्च,
तृतीयश्च चतुर्थकः ।
पुरुषार्थ—प्रभेदाश्च,
मान्या लोक-हितैषिभिः ॥

( ३ )

प्राणिनान्तु हितायैव,
कर्मसु ह्यखिलेषु वै ।
यत्नो विधीयते यश्च,
पुरुषार्थः प्रशस्यते ॥

( ४ )

विद्या-प्राप्तिर्धन-प्राप्तिर्,
बल-प्राप्तिश्च प्राप्तयः ।
एता विविध-भेदास्तु,
दान-भेदास्तथैव च ॥

( ५ )

विद्या-प्रदानैर्ननु लोकबुद्धिर्,
धन-प्रदानैश्च सुलोक वृद्धिः ।
बल-प्रदानैश्च कुनीति-हानिः,
कार्या जनानां हितकारिभिश्च ॥

( ६ )

सद्बुद्धियुक्ता ननु रोग हीनाः,
सुनीतिमन्तोऽखिल-लोक-वर्गाः ।
सुखं च शान्ति खलु धारयन्तस्,
दानैः प्रसन्ना विमला सदा स्यु ॥

( ७ )

बुद्धि-प्रयोगी खल-रोग-हीनो,
बल-प्रयोगी शुभ विक्रमश्च ।
सर्वार्थ-सौम्यः सुनरो यथा स्यान्,
नित्यं भवेयुर्भुवि चोद्यमा नः ॥

---

# श्रीगायत्री विजयतेतराम्

ले०--श्री नृसिंहदेवशास्त्रिः व्याकरणसर्वदर्शनाचार्य्य गुरुकुलकांगड़ी

ओ३म् भूर्भुवः स्वः तत्सवितुर्वरेण्यम्
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

तत्र गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिर-समेतां सर्ववेदसारामिति वदामि—भूरिति सन्मात्र-मुच्यते । भुव इति सर्व भावयति प्रकाशयतीति व्युत्पत्या चिद्‌रूपमुच्यते । सुव्रियते—इति व्युत्पत्या स्वरिति सुष्ठु सर्वैर्व्रियमाणः सुखस्वरूपमुच्यते । महरिति सर्वातिशयमहत्तमः पूज्यतमः "जनः" सर्वस्य जनकं कारणमित्यर्थ । "तपः" सर्वातिशय-परतेजस्वरूपमित्यर्थ. । "सत्यः" सर्वबाधारहितं नित्यमित्युच्यते । तच्छब्देन प्रत्यग् भूत स्वतः सिद्ध परं ब्रह्मोच्यते । इति शांकरभाष्यम् । सवितुरिति सृष्टिस्थितिलयलक्षणकस्य सर्वप्रपञ्चस्य समस्त-द्वैतविभ्रमस्याधिष्ठान लक्ष्यते इति शांकरभाष्यम् । सवितुरिति सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य इति सायणभाष्यम् । परमेश्वरस्यात्म-भूत वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयं वरेण्यमिति सर्ववरणीयं निरतिशयानन्दस्वरूपमिति शांकरभाष्यम् । सवितुर्वरेण्यमित्यत्र षष्ठीविभक्तिः, राहोः शिर इतिवत् अभेदार्थबोधिका । "भर्गः" अविद्यातत्कार्ययोर्भर्जनाद् भस्मीकरणात् भर्गोऽ-न्तर्यामी परमज्योतिर्ज्ञानस्वरूपमिति शांकरभा-ष्यम् । एवमेव सायणभाष्यम् । देवस्य, इति एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्ष. सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च ।

"धीमहि" इति पदम् "आत्मा—इत्येवोपासीत इति श्रुत्यर्थोपासनानुष्ठानसूचकम् ।" "धियो यो नः प्रचोदयात्" इति वाक्येन—अन्तर्यामी, ब्रह्मणः प्रति-पाद्यार्थसूचनेनान्तर्यामिणः परमात्मनः प्रत्यगात्म-नश्च शुद्धब्रह्मणोऽभेदसूचनम् ।

—o—

# असली सोम

सोमं मन्यते पपिवान् यत् सम्पिषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदु र्न तस्याश्नाति पार्थिवः ।। वेद

ओषधि पीस कर और रस निकाल कर पान करता है और यह समझता है कि मैंने सोम पान कर लिया । ऐसा पार्थिव—भोला आदमी उस दिव्य परम सोम-रस का पान त्रिकाल में भी नहीं कर सकता, जिसका कि ब्रह्मवेत्ता लोग किया करते हैं ।



# सूर्य-स्तुतिः

रचयिता—तेलकपल्लिरामचन्द्रशास्त्री (अभिनवकालिदास) राजापुरम्, आन्ध्रप्रदेशः

प्रसुप्ताखिललोकेषु चैतन्यामृतवर्षिणे।
त्रयीमयाय सूर्याय हृद्रोगापहृते नमः ॥ १ ॥

कमलामोदसन्धानपण्डिताञ्चित तेजसे।
अक्षयाय च सूर्याय क्षयरोगहृते नमः ॥ २ ॥

कर्मणां सर्वजन्तूनां साक्षिणे द्वादशात्मने।
तमोघ्नाय च सूर्याय शूलरोगहृते नमः ॥ ३ ॥

जगदारोग्यभाग्यैकदानदीक्षाव्रतात्मने।
विकर्तनाय सूर्याय पापक्षयकृते नमः ॥ ४ ॥

स्वर्णप्रभागलग्राहि सहस्रघृणि शालिने।
छायाप्रियाय सूर्याय कोकशोकहृते नमः ॥ ५ ॥

हुतभक्तमनस्तापहारिणे बलदायिने।
विरोचनाय सूर्याय घूकभीतिकृते नमः ॥ ६ ॥

लोकाधिव्याधिविध्वंस भिषगिन्द्राय भास्वते।
मिहिराय च सूर्याय ज्योतिषाम्पतये नमः ॥७॥

सस्यरक्षणचातुर्यपोषिताखिलजन्तवे।
प्रभाकराय सूर्याय हरिदश्वायते नमः ॥ ८ ॥

इलातलजलग्राहकलाकोविद भानवे।
वर्षप्रदाय सूर्याय लोकानन्दकृते नमः ॥ ९ ॥

चराचरात्मकजगद्योगक्षेमविधायिने।
विश्वात्मने प्रचरते सूर्याय श्रीमते नमः ॥१०॥

नित्यायनिगमान्तोक्तिवेद्यायाकाशचारिणे।
सुरस्तुत्याय सूर्याय तेजोरूपायते नमः ॥११॥

उद्यते ब्रह्मरूपाय ज्वलने शिवरूपिणे।
गच्छतेस्तं रमेशाय सूर्याय महते नमः ॥१२॥

★★★

# सावित्री-महिमा

ओंकार पूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणा मुखम्॥ मनुस्मृति

'ओ३म्' पूर्वक तीनों अव्यय, अविनाशी महाव्याहृतियां (भूः, भुवः, स्वः) और त्रिपदा अर्थात् तीन पदों वाली गायत्री = सावित्री को ब्रह्म का, वेद का मुख समझना चाहिये।

अरे भोले भाई! "गायन्तं त्रायते इति गायत्री" इसका सदा गान किया करो, यह रक्षा करने वाली है।



दिवंगतमान्य पं जवाहरलालनेहरूविषयकानि——

# मदीयसंस्मरणानि

लेखक.——श्री धर्मदेवो विद्यामार्तण्डः, आनन्दकुटीर, ज्वालापुरम्

अस्मिन् वर्षे मईमासस्य २७ दिनांके दिवंगतेन महामान्येन प्रधानमन्त्रिणा श्री पं० जवाहरलालमहोदयेन साकं मदीयो घनिष्ठः सम्पर्क आसीदिति यद्यपि वक्तु न शक्यते, तथापि देहलीनगरे, बगलौरनगरे, गुरुकुलकांगड़ीविश्वविद्यालये, ज्वालापुरमहाविद्यालयेऽन्यत्र च तस्य त्रिंशदधिकान्यतिस्फूर्तिदायकानि भाषणानि श्रोतुं,बहुवारं तं संभावयितुं, तेन च सह पत्रव्यवहारं कर्तुं मया सौभाग्यमधिगतमिति तद् विषयकानि कतिपयसंस्मरणानि पत्रव्यवहारसहितानि वाचकमहानुभावानां पुरत उपन्यस्तुमीहे ।

यदा, मन्ये १९३१तमे क्रिस्ताब्दे, राष्ट्रमहासभानायकः श्री पं० जवाहरलालमहोदयो लङ्कायात्रातः प्रतिनिवृत्त सपरिवारः ( तस्य धर्मपत्नी श्रीमती कमलादेव्यपि तदा जीवितासीत्कुमारीन्दिरा च तदा लघीयसी कन्यासीत्) बंगलौरनगर आगतस्तदा तन्नगरस्थैः सर्वैस्तस्य महदभिनन्दनं विहितं, तत्र आर्यसमाजप्रतिनिधिरूपेण च मया राष्ट्रभाषायां सज्जीकृतमभिनन्दनपत्रं महति समारोहे पठित्वा श्रावित, यत् तस्मै भृशमरोचत ।

तस्मिन्नवावसरे तस्य रौद्ररूपं तत्रत्याव्यवस्थासन्दर्शनजन्यमद्यापि नरीनृत्यति मम चक्षुषो पुरतः । दौर्भाग्यवशाद् वृष्टेः कारणात्सभाव्यवस्था समीचीना नाभवदिति तत्रत्यकांग्रेसशाखाध्यक्षः श्री भाष्यम् आयंगारसंज्ञः सुप्रख्यातोऽधिवक्ता श्री नेहरूमहोदयेन पौरजनानां पुरतो भृशं भर्त्सितः । अहमिदानीमेव सभामिमां परित्यज्य गमिष्यामीत्यपि तदा सकोपमभिहितं तेन, येन चकम्पिरे तस्य तद् रौद्ररूपमवलोक्य सभाव्यवस्थापकाः । क्षमयाचनानन्तरं स शान्तो बभूव । वृष्टेः कारणात्कस्याश्चिन्महिलायाश्चरणस्खलनं तस्य व्यवस्थानुशासनप्रियस्य महाभगस्य रौद्ररूपधारणकारणमभवत् ।

१५–८–१९४७ दिनांके स्वातन्त्र्यावाप्त्यनन्तरं मया सार्वदेशिकार्यप्रतिनिधिसभायाः सहायकमन्त्रिरूपेण यत्पत्रं मान्यनेहरूमहोदयं प्रति प्रेषितं, तदावश्यकत्वान्महत्वपूर्णत्वाच्चात्रोद्ध्रियते, हिन्दीभाषायां तदलेखि तदा मया । १

श्रीयुत मान्य पण्डितवर्य ! सादरं नमः ।

अस्मदीयप्रियदेशस्य स्वातन्त्र्यप्राप्तेः श्रीमतां च आर्यावर्तस्य प्रथमप्रधानमंत्रिपदग्रहणस्य शुभावसरे सार्वदेशिकसभायाः सहायकमंत्रिरूपेण,भारतवर्षीयार्यकुमारपरिषदश्च प्रधानरूपेणाहं स्वहार्दिकीं शुभाशंसां प्रेषयन् श्रीमत्सेवायां किंचित् निविविदिषामि—

(१) देशस्यास्यास्माकं 'इण्डिया' इति नामकरणं अस्मदात्मसम्मानविरोधि अस्मद्दास्यमनोवृत्तेश्च परिचायकं भविष्यति । अतः 'आर्यावर्तं' इति प्राचीनं अतिशयस्फूर्तिदायकं नामैव तस्याऽस्माभिर्विधातव्यम् । यतो हि आर्यशब्दो, धर्मात्मसदाचारिकर्तव्यपरायणपुरुषस्य द्योतकः । कः खलु देशभक्तो नाभिलषेत् यदस्माकं देशः तथाभूतधार्मिककर्तव्यपरायणजनानां देशः स्यात्। यदि वा एतन्नाम स्वीकर्तुं न कोऽप्युद्यतः,(यद्यपि पक्षपाताज्ञानमन्तरेण नैवान्यत्किंचित्कारणमस्य दुराग्रह दृश्यते) तर्हि, भारतवर्ष इति नामांगीकरणे न कोऽपि विवादः स्याल्लोकानाम्।

(२) अस्माकं 'राष्ट्रभाषा' नामकं पुस्तकं मया श्रीमत्सेवायां प्रहीयते, यस्मिन् गुजराती-मराठी-बंगाली-पंजाबी-कन्नड-तेलुगु-तामिलादिभाषोद्धरणपूर्वकं मयैतत्सिद्धीकृतं वर्तते, यत्संस्कृतनिष्ठहिन्दीभाषैव राष्ट्रभाषा भवितुमर्हति । अतो विनिवेद्यते

१. पत्रमिद हिन्दीभाषाया आसीत्, तस्य संस्कृतानुवादोऽत्र दीयते ।

यच्छ्रीमानपि हिन्दीभाषायां राष्ट्रभाषात्वेन सुपूर्णां देवनागरीं लिपिं च समर्थयतु, यथा हि विधानपरिषद. कांग्रेसदलेन बहुमतेन गत १७ जुलाई १९४७ तमे दिवसे प्रस्तावः पारितोऽपि । महदिदमाश्चर्यस्थानं यत्कथमयं विषय आवश्यकोऽपि भारतीयविधानपरिषत्समक्षं नैव प्रस्तूयते । एतदेव प्रजाया असन्तोषस्य कारणम् ।

(३) कतिपय समाचारपत्रेषु वृत्तमिद प्रकाशितमासीद्यत् गते वर्षे भारतसर्वकारस्य शिक्षामंत्रिणा मौलाना अबुलकलाम आजादेन अंजुमन तरक्किये उर्दू 'नाम्न्या.' प्रसिद्धउर्दूप्रचारिणीसंस्थायाः कृते सार्धलक्षरूप्यकमितं धनं दापयितमासीत् वार्षिकसहायतारूपेण, परं हिन्दीप्रचारार्थं बहुशः प्रार्थ्यमानाऽपि प्रयागस्थहिन्दीसाहित्यसम्मेलनसंस्था वराटिकामप्येकां नालभत । कियत्तथ्यमस्मिन्वृत्तान्त इति कृपयाऽवलोक्यतां, यतो हि भारतीयशिक्षामंत्रिणः उर्दूपक्षपातिनीतेरस्याः विरोधे महानसन्तोषः प्रजायां जागर्त्ति। यदि तथ्यमिदं तर्हि वस्तुतः अत्यन्तानुचितं पक्षपातसूचकं कृत्यमिदं, श्रीमतामप्यस्मिन्विषये सहमतिर्भविष्यतीति मन्ये । अतः श्रीमद्भिः कृपया तथा प्रबन्धः कर्तव्यः, यथा एतादृशस्य कृत्यस्य भविष्ये पुनरावृत्तिः मा स्यात्, यतो हि एतादृक् कृत्य शासनस्यापयशोधायकं भवति ।

भवदीयः
धर्मदेवो विद्यावाचस्पतिः

१९५४ क्रिस्ताब्दे यदा मया मान्यनेहरूमहोदयस्य जन्मदिवसमुपलक्ष्य पद्यबद्धः श्रद्धाञ्जलिः समर्पितस्तदाधोऽलिखितमुत्तरं श्री नेहरूमहोदयेन स्वकीयकरकमलद्वारा लिखित्वा प्रेषितं, यदधिगम्य प्रसादप्रासादमधिरूढं मे चेतः ।१

"भवद्भिर्या शुभाशंसा मम जन्मदिवसावसरे प्रेषिता, तदर्थं धन्यवादः । मद्देशवासिनः यथा मयि स्निह्यन्ति, तस्योत्तरं कया रीत्या मया प्रदातुं शक्यते ।"

नई दिल्लीत: जवाहरलालनेहरूः
२-१२-१९५४

१३ नवम्बर १९५५ मयाधोलिखितश्रद्धाञ्जलिसमन्वितशुभकामनापत्रं मान्यनेहरूमहोदयं प्रति तदीयं शुभजन्मदिवसमुपलक्ष्य प्रेषितम्—

भारतीयं राष्ट्रमेतत्, संविधातुं हि स्वतन्त्रं
यः प्रसेहे यातना:, नानाविधा कारागृहेषु।
वर्तते सौभाग्यतो यो मन्त्रिमुख्यो भारतस्या
सौ जवाहरलाल ईड्यो नेहरूवंशावतंस ॥
राष्ट्रहितचिन्तारतो रात्रिन्दिवं यो देशभक्तः
शिल्पविज्ञानादिदृष्ट्या भारताभ्युदये प्रसक्त ।
विश्वशान्तिस्थापना स्यादीदृशे विषयेऽनुरक्त
श्रीजवाहरलाल ईड्यो नेहरूवंशावतंसः ॥
राजनीतिज्ञेषु योऽयं, मन्यते प्रमुखो जगत्यां
यस्य हेतोर्गौरवं, देशस्य नूनं वर्धमानम् ।
पारतन्त्र्यविरोधिमुख्यं, प्रगतिशान्तिश्रीप्रियोऽसौ
श्रीजवाहरलाल ईड्यो नेहरूवंशावतंस ॥

अस्य पत्रस्योत्तरं मान्यनेहरूमहोदयेन पुनः स्वकीयहस्तद्वारा लिखित्वैवं प्रेषितम्—२

"श्रीमता मम जन्मदिवसस्य अवसरे याः शुभकामनाः प्रकटीकृताः, तदर्थं धन्यवादार्हः श्रीमान् । प्रेम्ण अस्योत्तरदानं तु कठिनमेव मत्कृते ।"

नई दिल्लीतः जवाहरलालनेहरूः
२२ नवम्बर १९५५

१०-११-१९५६ दिनांके मयाधोलिखितपद्यद्वारा तदीयं ६८ तमं जन्मदिवसमुपलक्ष्य श्रीनेहरूमहोदयस्याभिनन्दनमकारि—

स्पष्टवक्ता राजनीतिज्ञाग्रणीर्लोकेऽखिले
शान्तिमानेतुं जगत्या, यः सदा यततेऽनिशम्।

१. हिन्दीभाषालिखितपत्रस्यानुवाद ।

२. हिन्दीभाषालिखितपत्रस्यानुवाद ।

यस्य हेतोर्भारतं मान्यं पदं प्राप्तं भुवि,
श्रीजवाहरलालसंज्ञं, तं बुधं मुदिता नुमः ॥
वर्तते दृष्टिर्विशाला, यस्य लोकैक्यान्विता
द्वेष्टि निखिलेष्वेव रूपेष्वत्र यः संकीर्यताम् ।
यो दिदृक्षुः सर्वजातीयेषु सौहार्दं सदा
श्रीजवाहरलालसंज्ञं, तं बुधं मुदिता नुमः ॥
संस्कृत लभतां सुमानं, स्याच्च गोहिंसा निषिद्धा
राष्ट्रभाषा भारती स्याद्, यात्र हिन्दीति प्रसिद्धा
भारतीया संस्कृति स्यात्, सर्वकार्येष्वेव सिद्धा
श्रीजवाहरलालमित्थं, प्रार्थयन्तस्तं नुमः ॥
दीर्घमायुः शुद्धबुद्धिं, देवदेवेशः सदा
कीर्तिमारोग्यं प्रदद्याद्, देशनेत्रे सन्ततम् ।
स्यात् समृद्धं राष्ट्रमेतत्, सर्वसुखभागुत्तमं,
श्रीजवाहरलालहेतोः, प्रार्थयन्तस्तं नुमः ॥

एतदुत्तरं पुनः श्रीमान्यमहोदयेन स्वहस्तद्वारा लिखित्वैव प्रेषितं, यदधीत्य नितरां प्रमुदित आश्चर्यचकितश्चाहमभवमतीव कार्यव्यस्तत्वेऽपि तस्य सामान्यजनेषु स्नेहदृष्टिमवलोक्य । तेन महानुभावेनालेखि— १

"श्रीमत्प्रेषितमज्जन्मदिनसम्बन्धिशुभकामनार्थं वितनोमि धन्यवादम् । श्रीमत्प्रेम्ण उचितमुत्तरं प्रदातुं न सन्ति शब्दाः मम समीपे ।"

नई दिल्लीतः श्रीजवाहरलालनेहरूः
१७ नवम्बर १९५६

१९५८ क्रिस्ताब्देऽगस्तमासस्य प्रथमदिनांके यदा मान्यः प्रधानमन्त्रिमहोदयो विज्ञानभवनस्य शिलान्यासाय गुरुकुलकांगड़ीविश्वविद्यालयमाजगाम, तदाहं वेदोपाध्यायरूपेणेंग्लिशसंस्कृतहिन्दीकोषप्रधानसम्पादकरूपेण गुरुकुलपत्रिकासंपादकरूपेण च गुरुकुले कार्यमकरवम् । तदा गुरुकुलविश्वविद्यालयस्योपकुलपतिभिर्दिवंगतेन्द्रविद्यावाचस्पतिभिर्ममान्येषां चोपाध्यायानां परिचयः कारितः । विज्ञानभवनशिलान्यासमुपलक्ष्य यज्ञो ममैवाध्यक्षे संजातो, यस्मिन् नेहरूमहोदयः सप्रमोदं सम्मिलितः । विज्ञानभवनशिलान्यासानन्तर मया तमुपसृत्य 'वेदों का यथार्थ स्वरूप' Mahatma Buddha-an Arya Reformer इत्यादीनि स्वलिखितपुस्तकानि तस्मै सप्रश्रयं समर्पितानि, तेन च सहर्षं तानि स्वीकृतानि ।

तस्मिन्नेव दिवसे पञ्चाशत्सहस्रेभ्योऽप्यधिकजनानां संसदि मान्यनेहरूमहोदयेन भारतीयसंस्कृतिगौरवादिसूचकं स्फूर्तिदायकं भाषणमकारि, यस्य गुरुकुलपत्रिकासम्पादकरूपेण मया लिखितं विवरणमनेकपत्रेषु तदा प्रकाशितमासीत् । गुरुकुलविश्वविद्यालयेन च 'Pandit Nehru in Gurukul Kangri' इतिसंज्ञया नेहरूमहोदयस्य गुरुकुलनिरीक्षणविषयकं सर्वं विवरणं सचित्रं प्राकाश्यत यदेतल्लेखकाले मम सविधे वर्तते । २।८।४७ पत्रातिरिक्तं यदस्मिल्लेख आवश्यकत्वादुद्धृतं मया १०।१।५३, ६।४।५५, १४।११।५५ इत्याद्यनेकदिनाङ्केषु मया मान्यं नेहरूमहोदयं प्रति वैदिकधर्म—गोवधनिषेधादिविषयेषु महत्वपूर्णानि कतिपयपत्राण्यलेखिषन्त, किन्तु विस्तारभिया तानि नात्रोद्ध्रियन्ते ।

२७-५-१९६४ दिनाङ्के दौर्भाग्यवशात्तादृशस्याद्भुतराजनीतिविशारदाग्रगण्यस्य स्वदेशभक्तशिरोमणेर्नेहरूमहोदयस्याकस्माद् भारतराजधान्यां सकलजगते दुःखप्रदं निधनं समजनि । साकं ज्वालापुरीयवानप्रस्थाश्रमे तत्समाचारश्रवणसमकालं मया स्वकीया हृदयोद्गाराः या गुरुकुलपत्रिकायां जूनमासाङ्के कविताद्वारा प्रकाशिता, तया सह महामहिमनेहरूमहोदयविषयकानि सस्मरणानि समाप्यन्ते मया साम्प्रतं, शिष्टं पत्रव्यवहारादिकं पुनः कदाचिद् यथावसरं प्रकाशयिष्यते ।

★

१. हिन्दीभाषालिखितपत्रस्यानुवादः ।

# साहित्य-समीक्षा

( समालोचनार्थ प्रति पुस्तक की दो प्रतियां पत्रिका-कार्यालय में आनी चाहिये )

## सेवा और संघर्ष

[स्व०श्री प० जियालाल महोदयानां जीवनवृत्तम्]

लेखकौ—श्री पं० सूर्यदेव शर्मा, एम ए. एल. टी.
श्री सतीशवर्मा एम. एस्सी, ।

प्रकाशकः—जियालाल स्मारक समिति अजमेर
पृष्ठ संख्या १६४ । मूल्यम् २) ।

प्रस्तुतपुस्तकं स्व० श्री जियालालमहोदयानां जीवनवृत्तम् । एषां महाभागानामस्माभिस्तु दर्शनं न विहितम्, पर पुस्तकस्याध्ययनेन प्रतीयते यद् दिवंगतोऽसौ महाभागः कर्मशूर उत्साहशक्तिसम्पन्नो निर्भयश्चासीत्। निःस्वार्थसेवकोऽसावार्यसामाजिक-सिद्धान्तानां प्रचाराय सरक्षणाय च तेषां सततमुद्यत आसीत् । जीवननिर्मोही विपत्तौ पतितानां हिन्दूनां संरक्षणे सततं तत्परः ब्रह्मकुलोत्पन्नोऽपि सत्यं क्षत्रिय आसीत् । दुष्टानां दमनाय गच्छन्नेकोऽपि सन्न कदापि भयाक्रान्तो बभूव । केवलं विरोधभावनयाऽन्यधर्मावलम्बिनां विरोधकरणान्नाविरत आसीत् । साम्प्रदायिकसंघर्षे धर्मभेद-भावनां परित्यज्य पीडितानामाहतानां च मुस्लिमानामपि साहाय्यं तेन व्यधायि । सेवाकार्ये धर्मजातिभेदमविचार्य धनी वा निर्धनो वेत्यविगणय्य सर्वेषां साहाय्यकरणाय सदाऽग्रयायी । अतएवाखिलानां हिन्दुमुस्लिमेसाईधर्मानुयायिनामप्येष पण्डितः प्रिय आसीत् । अस्माद्धेतोः रेलविभागे श्री वली अहमद महाभागो मुस्लिमोऽपि सन् सर्वमपि तस्यापूर्णं कार्यं स्वयमेव समापयति स्मः । एतादृशा महापुरुषाः कदाचिदेव दृष्टिपथमायान्ति । भारते त्वेतादृशानां सर्वप्रियाणां सेवाधर्मपरायणानां महापुरुषाणामेव महत्यावश्यकता वर्तते । अस्य महापुरुषस्य वयं गुणकीर्तन कुर्मः । अस्योत्तमचरितचित्रणकर्त्रोर्महाभागयोरपि भृशमभिनन्दनं कुर्मः ।

## कल्याणी ( संस्कृत-पत्रिका )

सम्पादकः—श्री गोविन्दप्रसाद शास्त्री दाधीच ।

प्रकाशकः—श्री बाबूलाल जैन, खण्डेल हाउस,
कल्याण जी का रास्ता, चादपोल
बाजार, जयपुर, (राजस्थान) ।

वार्षिक मूल्यम् २), वर्षम्–१ अङ्कः–१

राजस्थानस्थेयं 'कल्याणी' नाम्नी संस्कृत-मासिकमुखपत्रिकाऽस्माभिः सम्प्राप्ता । तस्या अयं प्रथमोऽङ्कः । षड्विंशतिपृष्ठपरिमिता समुपस्थितेय कल्याणी संस्कृतवाङ्मयस्य समुद्धाराय । पत्रिकायाः प्रारम्भे निवेदनमितिकृत्वा कानिचिदुद्देश्यानि प्रदर्शितानि । प्रारम्भे तत्र लिखितं यत् "अधुना भारतस्य स्वतन्त्रतायां भारतसर्वकारः संस्कृतभाषाप्रचाराय पसाराय वा सर्वथा यतते। तस्मात् भारतीयानामपि तस्यां विशेषरुचिरुत्पन्ना एव विचार्य स्वकर्तव्यमपि परिज्ञाय संस्कृतभाषाभ्युदयाय कल्याणीति मासिक सस्कृतपत्रिका प्रकाश्यतेऽस्माभिः येन संस्कृतस्य प्रचारः प्रसारो वा भवेत् । आबालवृद्धं भारतीया. पूर्ववत् तामङ्गीकृत्य तस्यामेव सर्वं कार्यं च कुर्युः ।"

मन्ये सदुद्देश्यप्रेरिता पत्रिकेयं स्वजनिमालेभे। एवमेव संस्कृतवाङ्मयस्य समुद्धाराय परिपोषणाय परिवर्धनाय च बह्व्य एतादृश्योऽन्याः संस्कृतपत्रिका अपि नातिचिरं प्ररूढमूला अवलोक्यन्ते । शुभशकुनमेतत् । परमेताः सर्वाश्चिरस्थायित्वमाप्नुयुरिति वयं परमपितरं परमात्मानं प्रार्थयामहे। तथाप्यस्माकमेषा भणितिर्यत् सर्वकारसाहाय्येन विना सर्वे भारतीया अस्यामेव भाषायां पठनं पाठनं लेखनं भाषणमित्यादि सर्वं व्यवहारजातं कर्तुं पारयिष्यन्तीति न मन्तव्यम् । सर्वकारश्चापीयद्दूरं न गमिष्यति । अत्र सुरभारत्यां पठनं पाठनं लेखनं भाषणमित्यादि ब्रह्मकर्मस्वभावज-

मिति मत्वा गीर्वाणवाणीप्रणयिभिः संस्कृतप्रसाराय प्रयतितव्यम् । तदैव साफल्यमेष्यत्येष भगीरथ-प्रयासः । संस्कृतपत्रिकापरिवारमध्ये 'कल्याणी' नाम्नीं सुतामवाप्य देवी सरस्वती प्रसीदतु इति कामयामहे वयम् ।

आर्योदय ( हिन्दी साप्ताहिक )

( जीवन ज्योति.—दीपावली विशेषाङ्कः )

सम्पादकौ—श्री रघुवीरसिंह शास्त्री, श्री भारतेन्दुनाथ., प्राप्तिस्थानम्—१५ हनुमान-रोड, नई देहली । पृष्ठ संख्या २८३, मूल्यम् ३), सजिल्द ४) ।

आर्योदय साप्ताहिक पत्रस्य दीपावली विशेषाङ्कोऽयं जीवन-ज्योतिनाम्ना चतुर्दश शत साममन्त्र-प्रदीपद्युतिपुञ्जमवकिरन्नः समक्षं समुपस्थितः । अस्य जीवनज्योतिपुस्तकस्य महान् लेखकः स्वर्गतः श्री पण्डितचमूपतिमहाभाग आसीत् । एष महाभाग उर्दूहिन्दी-आंग्लादिभाषाणां प्रकाण्डपण्डित आसीत् । अनेन महाभागेनावलम्बिता भाषात्रयी नैकेषां स्वपुस्तकानां विरचनाय प्रगाढपाण्डित्यं सूचयति । प्रस्तुतपुस्तक जीवनज्योतिनामकं हिन्दीभाषायां लिखितं विद्यते । अस्यां चतुर्दश शत साममन्त्राणां सुरुचिरा प्रवाहपरिपूर्णा सुललित-भाषोपनिबद्धा व्याख्या विराजते । व्याख्यायां पदे पदे पदलालित्यसमन्वित कवित्वं प्रतिभासते । एवं प्रतीयते यदध्यात्मस्योत्तुंगशिखरमारुह्य पदवाक्यप्रसूनाञ्जलिमवकिरति कश्चिद् देवदूतो मानवानामुपरि । वेदमन्त्राणामतलस्पर्शिगाम्भीर्यं-मुद्धाट्य प्रकटीकृतं पण्डितवर्येण । सर्वोत्तममिदं पुस्तकं विशेषांकरूपेण प्रकाश्य सम्पादकमहाभागैः सर्वेषामतीवोपकारः कृतः । एवमेवानेकेष्ववसरेषु नैके विशेषाङ्काः सत्यार्थप्रकाशादिसंबद्धाः प्रकाशिताः सम्पादकमहाभागै. । वयं सम्पादकमहा-भागानां भूयो भूयोऽभिनन्दनं कुर्मः । पुस्तकस्य च प्रभूतं प्रचारं प्रसारं च कामयामहे ।

—भगवद्दत्तो वेदालंकारः

---

# सम्पादकीयटिप्पण्यः

## छात्रसमस्या तत्समाधानञ्च

भारतवर्षे प्रतिवर्षं नैकेषु विश्वविद्यालयेषु छात्राणामनुशासनहीनता-उद्दण्डता-सच्चारित्र्यहानि-रेवं बहुविधाः समस्याः सुरसावत् विकटाननं व्यादाय सर्वान् ग्रसितुं समुद्यता अवलोक्यन्ते । उड़ीसाप्रदेशस्य छात्रान्दोलनमस्य निदर्शनम् । एतदान्दोलनं विशुद्धरूपेण न केवलं विश्वविद्यालये-ऽधीतीनां युवयुवतीनामेवासीत् परमस्यापदेशात् प्रच्छन्नरूपेण विरोधिनामन्येषां राजनैतिकदलाना-मेव तत्राग्निसंधुक्षणमासीदिति समाचारपत्रै-र्विज्ञायते । न केवलं तत्प्रदेशस्यैवैषा समस्या परमन्यप्रान्तेष्वपि सा तथैव स्वल्पेनाप्यर्चिषा संज्वलति दावाग्निवच्च सर्वत्र सहसा प्रसारमेति । तस्मिन् समय उद्दण्डताया यन्नग्ननृत्यं सञ्जायते तद् दृष्ट्वा न कोऽप्येतद् वक्तुमलं यदेते विनेया भारतीयाश्छात्रा विनम्राः सम्यगनुशिष्टा वा सन्ति । किमेतत् साधुशिक्षणं नाम ? किमेते भारतीय-संस्कृतिसंरक्षका भविष्यन्ति भविष्यति ? अस्मन्मते त्वस्मिन्नायुष्यपक्वप्रज्ञा भवन्त्येते नैष दोषःकेवलमे-तेषां वराकाणाम् । दोषस्त्वस्माकं शिक्षानीति-निर्धारकाणां नेतॄणाञ्च विद्यते । अधुना विचार-णीयमेतद् यच्छात्रेष्वत्यधिकं प्रसृतानामनुशासन-

हीनतोद्दण्डतादिदुर्गुणानां विलोपाय किं प्रतिविधातव्यम्। शिक्षामन्त्री श्री छागला महोदयोऽपि शिक्षोन्नत्यै स्वमत्यनुसारेण भृशं प्रयत्नशीलो विद्यते। परं भाषा विषये तस्य नीतिर्न स्पष्टा, आंगलभाषाऽव्यामोह एव तत्र प्रतीयते। संसदि पूर्वस्वीकृतप्रस्तावस्यैवावमानना सा। समितिरप्येका सस्थापिता तेन यस्यां विदेशीयाः शिक्षाविदोऽपि स्थानमत्रालभन्त। सा समितिः शिक्षाविषयमवलम्ब्य विचारयिष्यति। अस्मिन् विषये त्वस्माकमेक एव परामर्शो यद् देशस्य सर्वे शिक्षणालया नगराद् बहिर्दूरदेशे वनेषु नेतव्याः। नगर नास्त्युपयुक्तं स्थानं शिक्षायाः। नगरेषु बहवो दोषा विद्यार्थिषु हठात् प्रविशन्ति न तान् कोऽपि वारयितुं समर्थः। किं नावलोकितं यदतीवतुच्छघटनां व्याजीकृत्यैतदान्दोलनं समजनि। रेडियोआपणात् समुत्पन्नोऽयक्रोधाग्नि र्दावानल इव यूनां हृदयेषु प्रासरत्। शासकेतरदलसम्बद्धपुरुषैरथवा केनाप्यप्रकटितकारणेन दलगतप्रच्छन्नविरोधिभिः प्राधम्यतेष सहसा प्रज्वलनशीलोऽन्धोऽग्निर्यूनां हृदि स्थितः। एतत्तु निश्चितं यच्छात्राणामान्दोलनेन सर्वत्र सर्वं नागरिकं जीवनमस्तव्यस्तमजायत। अतएवास्माभिरस्मिन् स्तम्भेऽसकृत् प्रतिपादितं यच्छिक्षणालयानामवस्थितिर्नगराद् बहिः कस्मिंश्चिद् दूरप्रदेशे वनमध्ये भवतु। शिक्षणसमये विद्यार्थी त्वेकान्ते संरक्षणीयो मातृगर्भवच्च संगोप्यो नवजन्मदातृभिराचार्यवर्गैः। यथा श्रुतिषु प्रोच्चारितम्—

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः। तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥ उपनयनकाले त्वाचार्यो मातृवत् ब्रह्मचारिणं स्वगर्भे संनिधत्ते। किं मातृगर्भो बहिरितस्ततोऽटति ? किमेनं कोऽपि द्रष्टुं पारयति ? एवमेव गुरुकुलवाससमये शिक्षणकाले विद्यार्थिनां येन केनापि पुरुषेण सह सम्पर्को न जायेत प्रयत्नस्त्वेष विधेयः। 'अन्यच्च यथा प्राक्तनाचार्यैः प्रतिपादितम्—लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः' ताडनमपि शिक्षायां ध्रुवमवलम्बनीयमिति।

## सर्वकारस्य मूल्यनियन्त्रणसम्बन्ध्यादेशानामवज्ञा

सर्वे विजानन्त्येवानुभवन्ति च यद् देशे सर्वत्र खाद्यवस्तुनोऽभावात क्षुधापरिपीडिताः बहवो जना अतिकष्टेन स्वजीवनं यापयन्ति। किं वस्तुत. खाद्यपदार्थानामभावो वर्तते, उत कृत्रिमाभावो जनैर्निष्पादितः। यस्मिन् क्षणे सर्वकारद्वारा मूल्यनियन्त्रणादेशः प्रचारितस्तस्मिन्नेव क्षणे विपण्यापणगणो रिक्तोऽजायत खाद्यपदार्थानामन्यत्र निगूहनाद्धेतोः। पूर्वं त्वसौ प्राप्यत एव न यदि कथंचित् प्रच्छन्नरूपेण प्रयत्नो विधीयेत तदसौ विशिष्टः पदार्थः कालाबाजारे-चौरबाजारे च पूर्वस्मादप्यत्युच्चमूल्येन पार्यते लब्धुम्। अनेन ध्वन्यते यत् सर्वकारादेशस्य न कोऽपि समुचितः प्रभावो जनतासु दृष्टिपथमायाति। सर्वकार जनतयोर्मिथः सामरस्यं परस्परसाहाय्यकरणं वा नावलोक्यते। अस्मिन् विषयेऽस्माकमेतदेव कथन यद् 'दण्डः शास्ति प्रजाः सर्वाः' एषा महाभारतभणितिः पुरातनकालात् सुपरीक्षिता अपि कथं नावलम्ब्यते ? मन्ये सर्वत्रदण्डपातः सुफललाभाय न प्रभवति सामादयोऽन्य उपाया अप्यवलम्बनीयाः, परं दण्डभीतिस्तु सद्यः फलदायिनीति मन्तव्यम्।

---

# आधुनिक हिन्दी साहित्य में ऐतिहासिक कहानियां

**श्री विष्णुदत्त राकेश, हिन्दी-विभाग, गुरुकुल कांगड़ी विश्वविद्यालय**

रस की स्थिति ऐतिहासिक अनुकार्यों में स्वीकार करके आचार्य लोल्लट ने कथावस्तु के विन्यास पर प्रेषणीयता की दृष्टि से बहुत पहले एक व्यापक और महत्वपूर्ण मान्यता का सूत्रपात किया था। ऐतिहासिक, पौराणिक अथवा इतिहासानुमोदित अनुकार्यों के सम्बन्ध में यह निःशंकभाव से कहा जा सकता है कि परम्परागत संस्कारों में लिपटे हुए राष्ट्रिय अथवा जातीय सांस्कृतिक तत्व हमारे अन्तर्मन के अधिक निकट होने से सर्वसाधारण की अनुभूति के अधिक प्रिय हो सकते हैं। अतः कथा-सूत्र का अन्तर्सूत्र चाहे काव्य एवं नाटक के पात्र में निहित हो या गद्य-विद्या के किसी वस्तुगत कारण में, उसका प्रभाव एक-सा रहता है। मूल-भाव का एकत्व तथा प्रभाव-समष्टि रसात्मक साहित्य की हर विद्या का प्राण तत्व होते हैं। आख्यान साहित्य एवं कथासाहित्य की यही प्रमुख-विशेषतायें हैं। भाव, विचार, घटना, चरित्र यदि एक स्थल पर केन्द्रित हो, विभिन्न परिस्थितियों और समस्याओं में, एक इष्ट के प्रतिपादन में एकोन्मुख रहें, तो पाठक विषय की ऐकान्तिक निष्ठा के कारण साध्य रूप में प्रतिपाद्य-सर्जना-बिन्दु (मूलभाव) के रसास्वादन में डूब जायेगा, भले ही उसे रचना-प्रक्रिया का बोध हो अथवा नहीं। विषय के एकत्व और समाप्तिस्थल की घटनात्मक अन्विति रोचक कथा की दो प्रमुख विशेषतायें हैं। मूलभाव के प्रसार के कारण ही उक्त दोनों तथ्यों में साध्य-साधन सम्बन्ध रहता है। प्रेमचन्द जी ने भी इसीलिये कविता के समान गल्प में भी एक मनोभाव का प्रदर्शन ही लेखक का उद्देश्य बताया है। अतः कहानी को रस की दृष्टि से भी एक ही प्रतिपाद्य का अभिनिवेश मानना चाहिये।

हमारी स्मृति, कल्पना और अनुभूति सामाजिक वातावरण, देशगत परिस्थितियों, सांस्कृतिक उत्थान-पतनों तथा प्राकृतिक विवरणों से संगठित होती रही हैं। अतः ऐतिहासिक तथ्यों की गवेषणात्मक तथा अनुमानजन्य कल्पनायें संवेदनशीलता के कारण अतीत के स्नेह को रस रूप में परिणत करती रहती हैं। कथात्मक प्रेरणा (Motive) या बीजभाव संवेदनाजन्य होने के कारण कृतिकार के मूलभाव की अनुकृति ही हैं। अतः ऐतिहासिक कहानी में पूर्वनिश्चित व्यवस्था-योजना, लक्ष्य की एकोन्मुखता, आरम्भ, उत्कर्ष तथा अन्त रचनात्मक चमत्कार से संलग्न रहने चाहिये। पौराणिक कथाओं में ही विकास और विगति नाम की कार्यावस्थायें स्वीकार की जाती हैं किन्तु तर्कपूर्ण ऐतिहासिक कथाओं में इनका कोई अस्तित्व नहीं होता। प्रेरणा भले ही चरित्रपरक हो या घटनापरक, तथ्यमूलक हो या कल्पनाजन्य, कथानक सुगठित, क्षिप्र तथा बुद्धि संगत हो। कार्य की दृष्टि से वातावरण सम्बन्धी, पात्रों की विषम परिस्थिति सम्बन्धी पात्रगत विरोधी वृत्तियाँ, तथा अन्तःकरण की द्वन्द्वात्मक चेतना कथा को संवेद्य होने में बल देती हैं। ऐतिहासिक कहानियों में—लक्ष्य के विकास और उत्कृष्ट चित्रण में इनका प्रमुख स्थान है। **प्रसादजी** की पुरस्कार और आकाशदीप कथायें इसी प्रकार की हैं। ऐतिहासिक कथाओं का आधार जीवनविषयक कल्पनात्मक सत्य होता है अथवा तथ्यपरक अनुभव प्रारम्भ से लेकर चमत्कारमयी समाप्ति तक रचना-प्रकार की दृष्टि से आदि, मध्य और अन्त का गठन होना आवश्यक है। मध्य तो चरम सीमा का ही पर्याय है जो चित्त को निर्णय के लिए दृप्तता प्रदान करता है। अतः ऐतिहासिक कहानियों में पूर्वपीठ का चित्रण,

मानव रूप का भव्य आकलन, संयुक्त अन्त तत्कालीन सामाजिक परिवेश, ऐतिहासिक औचित्य निर्वाह, बीज की दृष्टि से चरित्राङ्कन चरित्र-विश्लेषण के मनोवैज्ञानिक और सामाजिक आधार, नामकरण के विधेयक पक्ष, वश-विन्यास तथा अनुकूल भाषा का प्रयोग प्रमुख तत्व होते हैं। डा० श्री जगन्नाथ शर्मा एवं डा० श्रीकृष्णलाल ने उक्त तथ्यों का गम्भीरतापूर्वक विवेचन किया है। ऐतिहासिक कथायें प्रायः चरित्र प्रधान रही हैं, वातावरण का विस्तृत एवं रोचक चित्रण भी चरित्र-सृष्टि के लिये ही होने के कारण व्यक्तित्व विषयक प्रवृत्तियों का उद्घाटन कथाकार का प्रमुख लक्ष्य होता है। अतः चरित्र प्रकाशक संवाद एवं वातावरण का चित्रण कुशल कहानीकार के लिये आवश्यक है। परिवेश मण्डल का लक्ष्य भी परिस्थिति-योजना, प्रकृति सज्जा तथा तात्पर्यार्थ व्यंजक वातावरण का संगुम्फन है। अतः जीवन में घटित प्रमुख परिस्थिति अथवा घटना को लेकर तत्सम्बन्धी व्यक्तियों का युगानुरूप तथा तत्सामयिक समाजानुरूप मार्मिक चित्रण शुद्ध ऐतिहासिक; सांस्कृतिक एवं वातावरण-सम्बन्धी विवरण के आधार पर युगविशेष की संभावनाजन्य घटना का मार्मिक चित्रण, इतिहास समर्थित कहा जायेगा। रस और तात्पर्यार्थ की दृष्टि से राजनैतिक, धार्मिक, सामाजिक, मनोवैज्ञानिक एवं प्रतीकात्मक भेद उसके किये जा सकते हैं। ऐतिहासिक विकास में बाह्य जीवन की वास्तविकताओं का समग्र चित्रण तथा अन्तर्मन की गहराइयों का विश्लेषण बीज की दृष्टि से वस्तुनिष्ठ होता है और घटनावैचित्र्य तथा चरित्रवैचित्र्य रूप गत भेद। वातावरण इन्हें जोड़ने वाला माध्यम है। कार्य-व्यापार बीज का विकास है, जिसमें पात्र, मूलद्वन्द्व तथा समस्या का पूर्वाभास होता है तथा बीज से फलागम तक जिन्हें घटनाये बल देती रहती हैं, हिन्दी साहित्य में प्रसादजी से अब तक जितनी ऐतिहासिक कहानियां लिखी गई, उनके विश्लेषण का उपर्युक्त आधार ही अधिक स्वस्थ और रसानुकूल है। क्योकि ऐतिहासिक कहानी ऐतिहासिक तथ्यों का साहित्यिक आकलन है। इतिहास पोषित तथ्यों को सूत्रबद्धता तथा स्वाभाविकता देने के लिये ही साहित्यकार वहा उन कल्पनाओं का आश्रय लेता है जो सम्भाव्य हैं। यही कारण है कि ऐतिहासिक कहानियां लिखना सरल नही है। विलुप्त सामाजिक संस्कृतियों के पदचिन्ह और ऐतिहासिक अवशेषों का पूर्ण अध्ययन ऐतिहासिक कथाकार को करना पडता है। उपलब्ध वास्तु, मूर्त्तियों, चित्रों, काव्य-कृतियों, शिलालेखों, सिक्कों और ताम्रपत्रों के आधार पर समकालीन लिपिबद्ध सामग्री का प्रामाणिक परीक्षण करने के बाद ही वह कुछ लिख सकता है। यही कारण है कि आनुपातिक दृष्टि से हिन्दी में ऐतिहासिक कहानियों का परिमाण बहुत कम है। ऐतिहासिक उपन्यासों के जोड़ में रस-बोध के आदर्श को लेकर चलने वाली स्तरीय कहानियां तो और भी कम हैं।

यहां हम ऐतिहासिक कहानियों के परम्परा सूत्र अन्य आलोचकों के समान बृहत्कथाओं, चरित्र-आख्यानों, प्रबन्धकाव्यों अथवा आख्यायिकाओं में नहीं खोज रहे हैं। शुद्ध पौराणिक आख्यायिकायें भी कहानी के कलेवर और घटनापरिमिति के रसवादी आधुनिक आधार से दूर रहने के कारण हमारा विवेच्य नहीं बन सकती। १९०४ से १९११ तक लिखी गई हिन्दी की आख्यायिकायें इतिहास शैली में अवश्य लिखी गई हैं पर ऐतिहासिक औचित्य का निर्वाह उनमें नहीं हो पाया। मेरे इस कथन का यह अर्थ न लगा लिया जाये कि मैं पौराणिक कथाओं को ऐतिहासिक कहानियों से मूलभाव की दृष्टि से पृथक् मान रहा हूं केवल उन्हें पृथक् इस लिये देखने का निर्देश

कर रहा हू कि उनमे निहित रूपक कल्पनाओ का वैज्ञानिक विश्लेषण आधुनिक साहित्यकार द्वारा किया जाना चाहिये। इससे पूर्व उन्हे ऐतिहासिक श्रेणी में रखना जीवन-प्रक्रिया का विरोध करना है, इतिहास जीवन की क्रमिक प्रक्रिया है, त्वरागत उपलब्धि नही। अत. द्विवेदीयुगीन आख्यायिकाये रस बोध की दृष्टि से प्रयोगकालीन कहानिया ही कही जायेगी।

विशुद्ध ऐतिहासिक कथाओं का सूत्रपात हिन्दी मे प्रसादसस्थान से ही माना जायेगा। उनकी भावगत और शिल्पगत प्रवृत्तिया अतीत की सास्कृतिक मान्यताओं के सन्दर्भ में ही अभिव्यक्त हुई हैं। १९१० से १९२४ की छोटी-छोटी कहानियो का प्रथम मौलिक सग्रह 'छाया' ऐतिहासिक अध्ययन की प्रवृत्ति का परिचायक है। इस सग्रह का द्वितीय सस्करग १९१८ मे हुआ, जिसमें शरणागत, सिकन्दर की शपथ, चित्तौर उद्धार, गुलाम और जहानारा और जुड़गई। छाया ने मानो शरीर ग्रहण किया। कहानीशिल्प की प्रयोगशाला मे प्रसाद जी के कहानीकार का ऐतिहासिक निरूपण द्विवेदी युग जैसा रहा यथार्थ, इतिहास, प्रेम, करुणा नियति, कल्पनापूर्णगेयता और प्रसादान्तता इन कहानियों की विशेषता रही। १९२५ से १९२८ में प्रतिध्वनि और आकाशदीप सकलन प्रकाशित हुए। इन कहानियों में भाव-प्रवणता, प्रेम सौन्दर्यरहस्य और कविता का अद्भुत सम्मिश्रण है। 'प्रतिध्वनि' यौवन की प्रतिध्वनि है इस सग्रह की 'पाप की पराजय' कहानी 'आकाश दीप' की प्रेरणा भूमि है। 'खण्डहर की लिपि' और चक्रवर्ती का स्तम्भ इतिहास के धुंधलके में लिखे गये हैं। कथा सूत्र की दृष्टि से यहां प्रसाद, प्रेमचन्द से विलग प्रतीत होते हैं। छाया घटना प्रधान, प्रतिध्वनि भावप्रधान, किन्तु आकाशदीप की कहानिया चरित्र प्रधान हैं, आकाशदीप, ममता और स्वर्ग के खडहर में कहानिया ऐतिहासिक हैं जिनमें यथार्थ से निकलकर एकान्तिक आदर्श की ओर उन्मुख प्रसादजी का प्रेम-स्वर सौन्दर्य और करुणा की समन्वित मूर्त्ति की चरण रज लेने लग। वातावरण और द्वन्द्व, उद्देश्य और प्रभाव तथा चरम की दृष्टि से ये कहानिया उत्तम हैं। १९२९ से १९३६ मे आधी और इन्द्रजाल सकलन, पुरस्कार, आधी, सलीम, गुण्डा, देवरथ, सालवती, इन्द्रजाल तथा नूरी जैसी कहानिया सग्रहीत की गई हैं जिनमे मानवतावादी दृष्टि बिन्दु ने जीवन के अन्तर्गत, सुख दुःख का आवेष्टन किया है। भारतीय समाज के कतिपय उपेक्षित चित्र ऐतिहासिक और सास्कृतिक दृष्टिकोण की प्रौढता ने सालवती, देवरथ, आधी तथा नूरी जैसी रचनाओं में प्रस्तुत किये। भारतीय सस्कृति की आदर्शवादिता ममता, आकाशदीप, पुरस्कार और इन्द्रजाल जैसी कहानियों मे मुखर है। आरम्भ, उत्कर्ष और अन्त की त्रिकोण पद्धति के कथानक का सौन्दर्य आंधी और सालवती में देखा जा सकता है। समानधर्मा अन्य मानव से परिस्थितिगत विषमता जन्य द्वन्द्व का चित्रण 'सलीम' रचना में मिलेगा और मानस लोक में अधिष्ठित एक ही आभोग-भूमि का द्वन्द्वात्मक संघर्ष पुरस्कार और आकाशदीप रचनाये सन्निहित किये हुए हैं। कथा सूत्र में काल सम्बन्धी एव स्थान सम्बन्धी व्यवधान की सूचना परिच्छेद विभाजनपरक कहानी 'समुद्र सतरण' में मिलती है। नाटकीय आरभ की दृष्टि से आकाशदीप, प्रारम्भिक चित्र-योजना की दृष्टि से देवरथ, मानवीय चित्रण की दृष्टि से गुडा, प्राकृतिक चित्र-विधान की दृष्टि से पुरस्कार और स्वर्ग के खडहर में, चारित्रिक विकास की दृष्टि से आकाश दीप, पुरस्कार और ममता, चरित्र कथन की सीधी शैली की दृष्टि से गुडा, प्रतिपाद्य-सुबोधता की दृष्टि से नूरी सलीम, गुडा, सालवती, भावात्मक शीर्षक

की दृष्टि से व्रतभग, समुद्र संतरण और ममता, कथा पक्षात्मक शीर्षक की दृष्टि से इन्द्रजाल, तथा पीठिका की दृष्टि से पुरस्कार और दिसाती प्रसाद जी की श्रेष्ठ ऐतिहासिक कहानिया है।

प्रसाद जी के ही समानान्तर प्रेमचन्द ध्येयोन्मुखता को उपयोगिता के आधार पर लेकर चल रहे थे। प्रेमचन्द जी के चरित्र वर्गगत, जातिगत या प्रतीकात्मक होते हैं। प्रसाद की आभिजात्य भावनाओं को प्रश्न चिन्ह प्रेमचन्द जी की मध्यवर्गीय सामाजिक समस्याओ ने दिये। सामाजिक सघर्ष, मूल्यगत असफलता, रूढ़िबद्ध धार्मिकता तथा नैतिक दृष्टिकोण की जिज्ञासा ने ऐतिहासिक कथानकों में भी एक सवेदन उत्पन्न कर दिया। तथा वस्तुपरक आत्मानुभूति, उद्योग-धन्धों, व्यवसाय क्षेत्रों और शिक्षित मध्य वर्ग की गाधीवादी व्याख्या में अपना समय देने लगी। प्रेमचन्द ने इसी लिये एक ओर सामयिक राज-नैतिक चेतना का इतिहास लिखा तो दूसरी ओर आदर्शोन्मुख होने के कारण प्राचीन मर्यादा की प्रतिष्ठा तथा सामन्ती राजपूती काल को अपनी कहा-नियों का केन्द्र बिन्दु बनाया। 'राजा हरदौल', मर्यादा की बेदी, जुगनू की चमक, रानी सारधा, धोखा, दिल की रानी, वज्रपात आदि कहानियां जहां एक ओर राजपूती मर्यादा का चित्रण करती हैं, वहाँ सामन्ती विलासिता तथा ह्रासोन्मुखी नवा-बिता की गर्हित रूप-रेखा भी खीचती हैं। प्रसाद जी के पात्र बौद्ध दर्शन की करुणवादिता के अनुरूप भावों के तारतम्य से जुड़े हैं। उनकी कहानियों में करुणा की प्रतीक नारी सामाजिक बन्धनों और परम्पराओं के प्रति विद्रोह करती हैं। पुरुष पात्र भी उन्ही के व्यक्तित्व की परिधि में कथा-सूत्र का संचालन करते हुए प्रवृत्त होते हैं। यही कारण है कि प्रसाद जी की ऐतिहासिक कथाये नाटकीय तत्वो से पूर्ण हो गई हैं। उनकी कथाओं में चरम घटनात्मक-सयोगात्मक और व्यजक पाये जाते हैं। ममता, आकाशदीप सयोगात्मक और प्रलय, कमल तथा समुद्र सतरण चरम व्यजक के प्रतीक है। प्रेमचन्द यथार्थवादी परम्परा के पोषक होने के कारण तात्पर्यार्थ की मार्मिक अभिव्यक्ति में ही विश्वास करते थे. शिल्पगत वैविध्य को चमत्कार की छडी कह कर उन्होंने सोद्देश्यता मे व्यवधान माना था। अत घटना या बीज रूप मे समस्या की भूमिका, बीज की निष्पत्ति तथा द्वन्द्व का विश्लेषण उनमें प्रमुख है। लक्ष्यप्रधान होने के कारण कथानक की क्षिप्रता और परि-मितता से प्रेमचन्द जी में चरम की अपेक्षा फलागम का आग्रह अधिक है। सामान्य जीवन की उत्प्रेरणा और आदर्श ही उनका लक्ष्य रहा है। यही कारण है कि उनकी ऐतिहासिक कहानियों मे विविध सवेदनाओं के समन्वय के कारण कथानक लम्बे हो गये हैं। 'नवनिधि' में सगृहीत रचनाये समस्या, द्वन्द्व, कौतुहल, तथा उपसहार की दृष्टि से सुन्दर हैं। नाटक की अर्थ प्रकृति प्रकरी के समान ही सहायक एव दुहरे कथानक की दृष्टि से उनकी राजनन्दिनी कहानी अप्रतिम है। मूलकथा के समानान्तर चलने वाली नाटकीय अर्थप्रकृति पताका का निर्वाह उन्होंने 'मर्यादा की वेदी' कहानी में किया है। राजकुमारी प्रभा और राजकुमार मदार के समानान्तर ही चित्तौड़ के राजा भोज तथा प्रभा की व्यथा चलती है। यहा तात्पर्यार्थ का जन्म आदर्शभावभूमि, मर्यादागत गौरव तथा सर्वस्वत्याग की भावना से होता है। रानी सारंधा, विस्मृति, मर्यादा की वेदी, पाप का कुण्ड, शतरज के खिलाडी, वज्रपात, मुक्तिमार्ग तथा बलिदान यदि इतिहासाश्रित कहानिया हैं तो इतिहाससमर्थित राष्ट्रीयभाव-धारा प्रधान कहा-नियों में सुहाग की साड़ी, सत्याग्रह, तावान, विचित्र होली, अनुभव, भाड़े का टट्टू, ब्रह्म का

स्वर्ग, दहेज तथा निर्वासन का स्थान प्रमुख है। द्विवेदी युगीन अम्बरपुर के अमरवीर शरणागत तथा राधिकारमणसिह की वीरवाला भी उल्लेखनीय ऐतिहासिक कहानिया है। दारा की पराजय और निर्वासन के उपरान्त औरगजेब द्वारा दारा की प्रेमिका वीरबाला के एकान्तिक स्नेह की परीक्षा ली गई और जैसे-जैसे चाटुकार औरगजेब ने उसके अग-प्रत्यग की प्रशसा की वैसे-वैसे उस रमणी ने अपने अङ्ग कटवाकर राजा को भेज दिये।' डॉ० कमलेश ने ठीक ही कहा है कि उनकी नारिया इस लोक की दुर्लभ आत्माये हैं। १९१० से ही आचार्य शिवपूजन सहाय ने भी ऐतिहासिक कहानियों का सृजन प्रारम्भ किया था। भाषा एव शैली की दृष्टि से वे कहानिया अप्रतिम हैं। 'विभूति' नामक कहानी सग्रह की 'मुडमाल' रचना एक ऐतिहासिक कृति है। इसी संस्थान के समानान्तर ऐतिहासिक तथ्यों के आधार पर वृन्दावनलाल वर्मा ने वन्य व्यवहार, प्रेमचर्चा तथा विवरण की प्रचुरता के सम्मिलन से शुद्ध ऐतिहासिक रचनाओं की नीव डाली। प्रसाद ने यदि ऐतिहासिक वातावरण बनाया तो प्रेमचन्द जी ने उसे मर्यादा और भावुकता दो किन्तु तथ्यात्मक प्राण और बोलता जीवन वृन्दावनलाल वर्मा से ही मिला। हरसिहार शरणागत, तिरगे वाली राखी, हमीदा, मालिश, कटा फटा झडा कलाकार का दण्ड तथा मां के आँसू उनकी प्रतिनिधि ऐतिहासिक रचनायें हैं। कथानक खोजपूर्ण और प्रामाणिक हैं तथा सयोजन में कल्पना के धनी। 'मां के आसू' नामक रचना में त्रिम्बकराव दामाड़े तथा वाजीराव की पारस्परिक ईर्ष्या, त्रिम्बकराव का विद्रोह, बाजीराव की नीति निपुणता, साहू का असन्तुलन तथा उमाबाई की प्रतिक्रिया किन्तु मातृत्व सुलभ तरल मन का चित्रण वर्मा जी ने किया है। सामाजिक-मनोविज्ञान के प्राबल्य के कारण मानव के प्रति क्षमा ही रचना का लक्ष्य बिन्दु है। उग्र की 'मा' कौशिक का 'न्याय दण्ड', भगवतीप्रसाद की 'खाली वोतल', भगवती चरण का 'मुगलों ने सल्तनत बख्श दी' रचनाये व्यग्य प्रधान तथा इतिहास समर्थित ही कही जायेगी। रामकृष्ण दास कृत 'अन्त पुर का प्रारम्भ' प्रागैतिहासकालीन घटना का मनोवैज्ञानिक चित्रण है। कथानक का निर्माण जगल की निविडता से होता है। जगल निवासी नारी-पुरुष एक सिह को देखते हैं। पुरुष नारी को सुरक्षा के लिये गुहा मे छोड स्वय सिह के आखेट के लिये चल देता है। वह नारी को 'तुम सुकुमारी हो ?' कह कर उसका सरक्षण चाहता है। स्वय कर्म-मार्ग में उत्क्षिप्त होकर सिह का वध करता है, वह भयभीता नारी पुरुष के पराक्रम से गुहा में आनन्द की आरती उतारने लगती है और इस घटना से 'अन्त.पुर के प्रारम्भ' का सूत्रपात होता है। उनकी दूसरी गहुला नामक रचना मनोवैज्ञानिक द्वन्द्व की दृष्टि से महत्वपूर्ण है। हूणपति तोमारल के राज्य में मदसोर छत्रप हेमनाभ तथा राजकुमारी गहुला के प्रेमाख्यान की यह रोमाचक और सुन्दर कहानी है। गहुला द्वारा विदा के भीगे हुए क्षणों में हेमनाभ को दिये गये नील-कमल स्वर्ण मुद्रा-ग्रन्थित होकर मञ्जूषा में एकत्र होते रहे, समय बीतने पर छत्रप की हत्या के उपरान्त वही मञ्जूषा देख गहुला के नेत्रों में श्यामल सिधु लहराता रहा। उग्र जी की 'मुक्ता' नामक रचना में देवी शक्तियों के माध्यम से रागात्मक तत्वों के निर्माण की इतिहाससमर्थित रचनायें हैं जो प्रतीकात्मक हैं।

वृन्दावनलाल वर्मा के अतिरिक्त ऐतिहासिक कथाकारो में कलात्मक अभिव्यक्ति, घटनाओं का विस्तार, चरित्र-निर्माण, मनोविश्लेषण पद्धति, घटनाओं की नाटकीय अवतारणा और वातावरण सम्बन्धी साधारणीकरण एव रस-बोध के आदर्श

को लेकर चलने वाले प्रमुख कथाकार आचार्य चतुरसेन का नाम उल्लेखनीय है। दुखवा मै कासे कहू मोरी सजनी, नूरजहा का कौशल, सिह गढ विजय, वसन्त, पूर्णाहुति, भडा, बाहर भीतर, अबुफजल बध, प्रबुद्ध, भिक्षुराज, आचार्य उपगुप्त, जैसलमेर की राजकुमारी, वीर बादल, कुभा की तलवार, हल्दीघाटी मे, राजपूतनी की राख, राजकुमार चूडा जी, धरती और आसमान, अम्बपालिका, क्रीता, प्रतिदान, सोया हुआ शहर, ताज, हैदरअली, तथा दिल्ली दरवाजे में शिवाजी, उनकी प्रमुख रचनाए है। जिनमे कल्पना, इतिहास और रुमानी धरातल का मणि-काचन योग उपस्थित हुआ है। चारित्रिक द्वन्द्व, वातावरण तथा सयोगात्मक चरम की दृष्टि से 'दुखवा मै कासे कहू' रचना उत्तम है। मौन वादी दार्शनिक तथा वैयक्तिक चरित्र की दृष्टि से जैनेन्द्र की प्रतीकात्मक एव इतिहासानुमोदित रचनाओं का प्रभाव सम्बन्धी उत्कर्ष असदिग्ध है। पौराणिक रूपक-कथाओं को नवीन रूप में प्रस्तुत करने के लिये नारद का अर्घ्य, बाहुबली, ऊर्ध्वबाहु, देवी-देवता, गुरु कात्यायन, अनवन तथा भद्रबाहु ऐसे प्रयास हैं जिनकी परिसमाप्ति दार्शनिकता को ध्वन्य करती है। ऐतिहासिक सवेदना के आधार पर जयसधि, राजरानी, साधू, वैरागी, राजकन्या, युवराज, यशोविजय, वसंततिलका, जयवीर, तथा यशस्तिलका रचनाये चारित्रिक विकास, नैतिक धारणा, आत्मविश्लेषण तथा अनुमूलात्मक रचनाये हैं, इतिहास के प्राङ्ग मौर्य तथा परवर्ती वातावरण को लेकर राहुल जी ने ऐतिहासिक औचित्य के परिवेश में सुन्दर रचनाये लिखी। उनका मानव जीवन-अध्ययन सम्बन्धी दृष्टिकोण ही मानव के ऐतिहासिक विकास के सन्दर्भ में पला है। व्यक्ति-प्रधान और समाजप्रधान युगीन दृष्टिकोण से ही उन्होंने भारतीय इतिहास की तीन चार हजार वर्ष तक की लिखित सामग्री का परीक्षण किया है। 'प्रभा' उनकी सर्व श्रेष्ठ प्रतिनिधि ऐतिहासिक कहानी है। साकेत की पृष्ठभूमि, पुष्यमित्र की यश व्यजना, वसन्तोत्सव का विवरण, पीत केश धारणी सुवर्णाक्षी ब्राह्मणकुमारियो, अचिरस्थाई मादक तारुण्य पिये कर्पूर श्वेत यवनियो तथा कौमार्य राशि सभाले गोधूम वर्णा वैश्यतरुणियों का रूप-चित्रण, अश्वघोष की तैराक प्रतियोगिता, यूनानी और भारतीय नाट्य पद्धतिगत भेद, यवन नायिका प्रभा को अश्वघोष के प्रति अनुरक्ति, वर्ण व्यवस्था सम्बन्धी कठोरता और प्रभा का कवि-निर्माण के लिये आत्म बलिदान रचना के ऐतिहासिक किन्तु मार्मिक स्थल है। राहुल जी के समान ही भारतीय इतिहास के प्रसिद्ध चिन्तक डॉ० भगवतशरण उपाध्याय की ऐतिहासिक रचनाये भी हिन्दी की अक्षय विभूति हैं। 'देवी चन्द्रगुप्त' उनकी प्रतिनिधि रचना है, इसमें कदम्ब-केतकी सी प्रसाधिता ध्रुवस्वामिनी की वज्रादपि कुसुमता, रामगुप्त का कादर्य, चन्द्रगुप्त का शौर्य और विधवा विवाह की प्रगति कामिता गुप्तकालीन मुक्ताभ यश राशि का काव्योचित्त अभिव्यञ्जन है। हिन्दी के आधुनिक ऐतिहासिक रचनाकारों में सर्व श्री अनन्त की 'दूसरा एकलव्य', अरुण की 'भूमि की लहर' आनन्दप्रकाश जैन की अन्तिम नग, अज्ञेय कृत 'जयदोल, भगवती शरणसिह कृत 'अपराजिता', राजाराम शास्त्री कृत 'हरियाणा लोक मच की कहानिया', आनन्द प्रकाश जैन कृत 'काल के पंख' 'अतीत के कम्पन' 'पत्थर की आख' 'चन्द्रगुप्त की मोहर' 'शतरज की बाजी' पान का गुलाम' आरिग पूडि कृत 'महाबलि पुर' 'धन्यभिक्षु' गोविन्द वल्लभ पत कृत 'राष्ट्रद्रोही का धन' 'मिलन मुहूर्त' 'उपगुप्त' 'वासवदत्ता का प्रेम' 'तैमूरलग' 'सबसे बड़ा रत्न' सुदर्शन कृत 'पत्थरों का सौदागर' 'फरऊन का प्रेम' चन्द्रकिरण सोन-

रेम्सा कृत 'कल्याणी,' जगदीशनारायण माथुर कृत 'असतेनमृत', परदेशी कृत चम्पा के फूल, प्रह्लाद-मित्तल कृत 'राजमहिषी का न्याय' मनमोहन सरल कृत 'अधरो की मदिरा' महीपसिह कृत 'कोहनूर की कीमत' 'सुबह के फूल' यमुनादत्त अशोक कृत 'पत्थर की लकीरे' यादवेन्द्र शर्मा-चन्द्र कृत 'मगलमुखी' 'घूघट के आसू' रतनलाल-बसल कृत 'चट्टान और लहर' 'तीन क्रान्तिकारी' 'आज के शहीद' 'मुस्लिम देश भक्त' रागेय राघव कृत 'देवदासी' विश्वदेव शर्मा कृत 'केसर का रग' विष्णु प्रभाकर कृत 'जीवन-दीप' शकर पुणतावेकर कृत 'सुजाता', शशि भूषणसिहल कृत नमक के लिये शैलेश मटियानी कृत 'तथ्य और सत्य' सावित्री निगम कृत 'गूजरी महल' सुरेश भटनागर कृत 'दस अगुलियां एक धागा' स्वरूप ढौढियाल कृत 'प्राचीर के पीछे' हसराज रहवर कृत 'भूत की परछाई, हरिदत्त भट्ट शैलेश कृत कलाकार का मूल्याङ्कन' श्री टेकचन्द्र गुप्त कृत 'सोये खडहर जागे' चणक का श्राद्ध' 'सन्ध्या की पूजा का दीपक' 'जब कटा हुआ सिर हसा' 'देश भक्त का परिचय तथा राधाकृष्ण कुकरेती कृत 'तिलू रौतेली' 'माधो भण्डारी' 'कृतियां इतिहास' कल्पना और सौन्दर्य-निष्ठा की सॉस्कृतिक, प्रतीकात्मक एव मनोविश्लेषणात्मक रचनायें हैं ।

इनमें भी रागेय राघव कृत 'देवदासी' पल्लव-कालीन सस्कृति, राजप्रासाद के विकार आलिन्दों में महकने वाले अगरु गध-मेघों, दीपाधारों के स्फटिक ज्योति कलशों, मन्दिर व्यवस्था, कवि-स्नेहिल छदकिसलियों, स्वर्णपिहित सतीत्व का दभ, मुक्ता और चीनांशुकों का मांसली प्रभाव, देवदासी प्रथा का दुष्क्रम तथा कठोर सामाजिक नियमो के चित्रण की दृष्टि से प्रतिनिधि रचना है। 'पत्थर की लकीरें' १८१३ के गोरखायुद्ध की घटना, कुमायू और तिब्बत का गटबन्ध तथा अग्रेजी कूटनीति की सुन्दर अभिव्यजना है । टेकचन्द्र गुप्त कृत देशभक्त का परिचय शिवाजी के प्राण प्रिय कान्हो जी की वीरता, खन्धेरी टापू का राजनैतिक प्रभाव तथा राष्ट्र रक्षा की पुनीत भावना परक त्याग और वीरता की सुन्दर अभिव्यक्ति है । शकर पुणताकेशव 'सुजाता' और शशि भूषण कृत 'नमक के लिये स्वामिभक्त सेवको की कर्त्तव्य की वेदी पर कर दिया गया है । महीप सिह कृत कोहनूर की कीमत, यदि सिक्ख साम्राज्य तथा वचन-निष्ठा स्वर्णिम प्रभात की ज्योति लेखा है तो जगदीश-नारायण माथुर कृत असतेन मृत चणक्य की कूटनीति का, फूल-गध में तक्षक का भयावह सकेत । श्री कृष्ण सम्पादित 'प्रतिनिधि ऐतिहासिक सकलन' इस दृष्टि से स्तुत्य प्रयत्न कहा जायेगा, इसमे सभी आधुनिकतम कृतिकारो की रचनाएं सकलित हैं ।

इन ऐतिहासिक रचनाओं के अतिरिक्त इतिहास समर्थित सास्कृतिक कथाओं का सृजन और सकलन भी आधुनिक लेखक कर रहे हैं। लोक कथामाला का विविध सकलन, पौराणिक, सांस्कृतिक एव सामाजिक विश्वासों के मुखर स्रोत हैं । आत्माराम एण्ड सन्स से प्रकाशित सुरेश शुक्ल कृत अल्मोडा की लोक कथाये, गोप लकृष्ण कौल-कृत अवध की लोक कथाये, श्रीकान्त व्यास कृत असम की लोक कथाये, राजशेषगिरि राव कृत आध्र की लोक कथाये, प्यारेलाल कृत उज्जैन की लोक कथाये, सावित्रीदेवी कृत उत्तर भारत की लोक कथाये, ज्ञानेन्द्रकुमार कृत कर्नाटक की लोक कथाये, नन्दालाल चन्दा कृत कश्मीर की लोक-कथाये, सुरेश भटनागर कृत कुरु प्रदेश की लोक कथाये, ज्ञानेन्द्रकुमार कृत केरल की लोक कथायें, श्रीकान्त व्यास कृत गुजरात की लोक कथायें गोविन्द चातक कृत गढ़वाल की लोक कथायें, सतीश कृत जौनमार बाबर की लोक कथायें,

आनन्दप्रकाश जैन कृत तैलगोना की लोक कथाये, गोविन्दचातक कृत नेपाल की लोक कथाये तथा प्रीतम सिह पछी कृत पजाब की लोक कथाये, कथा सूत्रों की विविध एव बार बार पुनरावृत्ति के कारण प्रामाणिक और ऐतिहासिक हो गई हैं। अतीत के इति वृत्तात्मक इस भाग को सास्कृतिक और सामाजिक जीवन का स्रोत होने के कारण जातीय और राष्ट्रीयता इतिहास के कोश में समाविष्ट कर लेना चाहिये। इस आधार पर इतिहास समर्थित रचनाओं के क्षेत्र में इन्हे भी ऐतिहासिक कृति स्वीकार कर लेना आवश्यक है। किन्तु हिन्दी के सम्प्रति कथाकारों से एक नम्र निवेदन मुझे करना है कि वह ऐतिहासिक कहानियों की विकास परम्परा में अपना योग दे। भारतीय इतिहास के गहन अध्ययन के बिना यह सम्भव नही है। यदि ऐसा हुआ तो निश्चय ही इस आस्थापूर्ण श्रम से भारतीय इतिहास के कई विस्मृत चित्र अनावृत हो सकेंगे। आज के मानव के खण्डित व्यक्तित्व और अर्थ हीन जीवन मूल्यों के परीक्षण में यह दिशा भी व्यवधान नही बनेगी। राहुल कृत जय यौधेय, सुदास, यशपाल कृत दिव्या, चतुरसेन कृत वैशाली की नगरवधू, सोमनाथ, वय रक्षाम, यादवेन्द्र शर्मा कृत खम्मा अन्नदाता रागेय राघव कृत मुर्दो का टीला, वृन्दावनलाल वर्मा कृत मृगनयनी, लक्ष्मी बाई, भिक्खु कृत महाश्रमण सुने, उनकी परम्पराये सुने, तपनमोहन चट्टोपाध्याय कृत पलासी का युद्ध, अमृतलाल नागर कृत शतरज के मोहरे, देवेशदास कृत राजसी तथा आनन्दप्रकाश जैन कृत तीसरा नेत्र उपन्यासो में जिस अन्तर्भेदिनी इतिहास दृष्टि का परिचय मिलता है, उसी प्रकार ऐतिहासिक कहानिया लिखने की ओर लेखक सचेष्ट हैं। मौर्य और शुग-कालीन जीवन से लेकर अद्यावधि पर्यन्त जीवन को तथ्यों द्वारा बाध दे। कथा-पुराणो की दिशाओ को यथार्थता प्रदान करे, सामयिक जीवन को तथ्यों द्वारा बाध दे। कथा-पुराणों की दिशाओं को यथार्थता प्रदान करे, सामयिक जीवन को इतिहास की छाया में देखे और रसबोधात्मक निर्णय दे तो हिन्दी की ऐतिहासिक कहानियों को पाठक नही खोजने पडेगे। यही आकर प्रकाशक के दायित्व का प्रश्न भी खडा होता है कि वह ऐसे प्रतिनिधि सकलन अधिकाधिक अधिकारी विद्वानों द्वारा सम्पादित करा कर लोकरुचि का परिष्कार करे।

---

## पश्य देवस्य काव्यम्

अन्ति सन्तं न जहाति,
अन्ति सन्तं न पश्यति।
पश्य देवस्य काव्यं,
न ममार न जीर्यति ॥

अथर्व. १०-८-३२।

---

